|| श्रीः ||

S. N... ...

|| श्रीसीतास्वयंवरम् ||

# SRI SEETHASWAYAMVARAM

WITH A FOREWORD BY

Rao Bahadur
**Prof. B. Venkatesachar**, M.A., F. Inst. P., F. N. I.
Prof of Physics (Retired) Central College
and Ex-Director, Indian Institute of Science, Bangalore.

BY

Sahithyalankara
**Sri K. S. Nagarajan**, B.Sc.,
( Supt Elec Audit )
Author of Stothra Muktaphalam, Bharatheeya Desabhakta Charitam
Sri Sabari Vilasam etc

---

AWARDED THE DEVARAJA BAHADUR LITERARY
**Prize for 1947—Vide D. P. I. No. $T_2$ 63-3/47-48**
**and No. D. 25—48-49**

---

PRINTED BY
V. B. SOOBBIAH & SONS, BANGALORE -2
1949

Price Rs. 2-8-0 ] [मूल्यम् रू. २-८-०

# FOREWORD

The theme of this work is taken from the Balakanda of Valmiki Ramayana. It begins with the entrance of Sage Viswamithra into the Sabha of Dasaratha with the object of asking the King to send Sree Rama and Lakshmana for the protection of his Yagna and ends with the celebration of the marriage of Seetha with Rama. The young poet has taken care to see that the work answers all the requirements prescribed for a Mahakavya by Indian Writers on Rhetoric. The author displays poetical powers of no mean order in the narration of the story and for a maiden attempt the work is remarkably good. The importance of Sanskrit has come to be recognized all over India and it is only in the fitness of things that the country should encourage authors of talent so that Sanskrit literature may be enriched by works in prose and verse suited to the requirements and ideals of free India. I have much pleasure in recommending this work, **Seetha-swayamvaram**, to all interested in the advancement of Sanskrit culture.

**14—10—1949** **B. Venkatesachar.**

## ॥ विषयानुक्रमः ॥



॥श्रीः॥

# निवेदनम्

एकदा पूर्वे वयसि देवालयप्रदक्षिणक्रियानिरते मयि, छन्दोमयीं कांचिदेवं निस्ससार सारवती सरस्वती "श्रीमण्डिता षण्डतपःप्रभावः समागमो पङ्क्तिरथस्य राज्ञः" इति। इत्थं स्वयमागतायां कवितायामहं परमानन्दभरितः तस्यै यथाक्रमं यथाशक्ति च स्वागतं दत्वा तं श्लोकमेव काव्यस्य प्रथमं कृत्वा श्रीसीतास्वयंवरं नाम श्र्यङ्कं षोडशसर्गोनुपाणितं महाकाव्यमिदमनायासेन कृतवान् भगवत्कृपापीयूषबिन्दुसन्दोहरञ्जितं च। "काव्यं यशसेऽर्थकृते शिवेतरक्षतये" इत्यादिवाक्यानुसारेण कथमपि चराचरजगन्नाथस्य देवाधिदेवस्य भगवतस्स्तोत्रं चिकीर्षुरेव काव्यमेतद्विरचितवानहम्। अयमेवास्य काव्यस्य रचने प्रधानोद्देशः।

अस्त्यस्यापरोऽप्युद्देशः। परभाषानिबिडीकृते कलिदोषबाहुल्यकल्मषीकृते देशेऽस्मिन् सर्वभाषामातृभूतायामस्यां गीर्वाणभाषायां सर्वेषामादराकर्षणं कर्तव्यम्। संस्कृतभाषाभिवृद्धिरपि साहित्योन्नतिसाधनक्रियया केनचिन्नवीनमार्गेण नूतनकृतिभिः काव्यरचनादिभिश्च साधयितव्या। देशकालानुरूपाणि काव्यानि मनोरञ्जकानि विरचय्य सर्वेषु जनेष्वादराङ्कुरः समर्पणीयः। यथा संस्कृतभाषा पुनरपि देवैरपि माननीयं स्थानमापद्यते, भारतीयराष्ट्र-

भाषा च भूत्वा धवलतरां कीर्तिं लभते सर्वेषां हृदयानन्दिनी, तथा सर्वविधानैरतन्द्रितैरस्माभिः प्रयतितव्यम् । यद्ययमीषदप्युद्देशो लब्धः स्यात् काव्यरचनेनानेन कृतकृत्योऽस्मीति मन्ये ।

शैशव एव मया गीर्वाणभाषाभ्यासः त्रिकाण्डामरकोशपठन-वेदाध्ययनादिभिरस्मत्तातपादानामायुर्वेदविद्याविशारदानां संस्कृतविद्या-वारिधीनां पण्डितानां श्रीशेषाद्रिशर्माभिधानां पादारविन्दयोरेव सम्यगारब्धः । ते निखिलायुर्वेदविद्यापीठशास्त्रीयकल्याणपुरी (बेङ्गलूर) केन्द्र मन्त्रिणश्चाभवन् । अपि च निखिलकर्णाटकायुर्वेद-मण्डलकार्यदर्शिनो भूत्वा बहुकालपर्यन्तं सर्वेषां प्रीतिपात्रमभवन् । रोगनिदानचिकित्साक्रियासु अभूतां श्रद्धां प्रदर्श्य चार्तानां कष्ट-निवारणतत्परा बभूवुश्च ।

काव्यमिदमामूलाग्रं विमृश्य प्रकाशनार्थं शतद्वयरूप्यपरिमितं साहाय्यधनं परमकारुण्येन पारितोषिकरूपेण वितीर्णवतां श्रीदेवराज बहादुरधर्मसंस्थामान्यसदस्यानां सुविनयमर्प्यते कृतज्ञता ।

मदीयां याचनामुररीकृत्य सादरं सप्रमोदं चास्य ग्रन्थस्य पूर्वभाषणमनुगृहीतवतां श्रीमतां महीशूरविश्वविद्यालयीय केन्द्र-कलाशाला विश्रान्तभौतिकशास्त्रप्रधानाचार्याणां भारतीयविज्ञानशाला-निवृत्तसंचालकानां च महामहिम्नां रावबहादुर् प्रो. वि. वेङ्कटेशाचार् एम्. ए. एफ्. इन्स्ट् पि. महाशयानां च प्रणतिपूर्वकमाधमर्ण्यं सप्रश्रयं निवेदयामि ।

काव्यस्यास्य मुद्रणवेलायामशुद्धपत्रिकाशोधनेन ममामूल्यसाहाय्यमाचरितवतां मुद्रद्वयं कल्याणपुरी सैन्यकटकस्य सैण्ट् जोसेफ् कलाशाला संस्कृताचार्याणां भारतीयभाषाप्रधानाचार्याणां विद्याभास्कर विद्वान् एम. रामकृष्णभट्ट, एम्. ए. महोदयानामतीव कृतज्ञोऽस्मि। एवमेव श्रममविगणय्य काव्यस्यास्य मुद्रणमुत्साहेन कृतवतां कल्याणपुरीस्थ (बेङ्गलूर) श्री वे. बि. सुब्बय्य अण्ड् सन्स् अभिधानामपि अवश्यं कृतज्ञता समर्पणीया। काव्यमिदमवलोक्य स्वाभिप्रायान् सादरं दत्तवतां महनीयानामपि नितरामहं कृतज्ञः।

प्रमादवशादत्र दोषाः कतिचित्सम्भवेयुः, यत्सहजः खलु मानुष्यकोऽपराधः। तथापि सर्वे सज्जनाः प्रस्तुतं प्रथममेव निरूपितसुहृद्द्वयमुररीकृत्य हंसक्षीरन्यायेन गुणानेवात्र परिगृह्य मामनुगृह्णीयुरित्यभिमन्ये। यदि भवेत्काव्यमिदं सतां मुदे स्वतन्त्रभारते संस्कृतभाषायां नवसाहित्यसृष्टिसूचकं च, धन्योऽस्मीति सप्रश्रयमञ्जलिबन्धं निवेद्यते।

इति,
सज्जनविधेयः
नागराजः

कल्याणपुरी (बेङ्गलूरु)
विरोधि संवत्सर आश्वयुज शुद्ध
दशमी स्थिरवासरः।
1-10-1949

॥ श्रीगणेशाय नमः ॥

## ॥ विघ्नेशस्तुतिः ॥

गजवदनमहीशाबद्धकुक्षिप्रदेशं
पुररिपुमुखदेवैस्संस्तुतंश्रीपदाब्जम् ।
नवरसयुतकाव्यप्रक्रमे भक्तिनम्रो
गणपतिमहमीडे विघ्ननिर्मूलनार्थम् ॥१॥

---

## ॥ शारदास्तुतिः ॥

ब्राह्मीं ब्राह्मणसङ्घसंस्तुतपदां ब्रह्मादिदेवस्तुतां
ब्रह्मज्ञानमहार्णवाम्बुनि सदा निर्मज्जतां मुक्तिदाम् ।
ब्रह्मानन्दकरीं चराचरमयीं ब्रह्मप्रियामीश्वरीं
काव्यब्रह्ममयीं कवीन्द्रविनुतां वन्दे महाभारतीम् ॥२॥

---

## ॥ वाल्मीकिस्तुतिः ॥

श्रीरामनामामृतदिव्यधारा लोकस्य मुक्त्यै भुवि यो मुमोच ।
वाल्मीकिमेवं तमहं नमामि यतः कथेयं किल चैकधारा ॥३॥

---

## ॥ कविस्तुतिः ॥

श्रीकालिदासं कविकामपीठं वन्दे महाकाव्यनिकुञ्जभासम् ।
तथा कवीन्द्रानपि भारतीयान् प्रणम्य काव्यं रचयामि रम्यम् ॥

---

## ॥ काव्यप्रशंसा ॥

सीतायाश्चरितं मया विरचितं कर्णामृतं ज्ञानिनां
रोमाञ्चोद्गमकारणं शुचिमतां हर्षप्रदं धीमताम् ।
वीराणामपि वीर्यवर्धकमिदं दुःखापहं दुःखिनां
बालानां सुलभं सुखं विरहिणां विश्वप्रमोदास्पदम् ॥

सन्तस्समीक्ष्यात्र गुणान् गुणज्ञाः
स्वीकृत्य नन्दन्तु महात्मनस्तान् ।
इत्यर्थयेऽहं शिरसा प्रणामं
करोमि कल्याणशतामिलिप्सुः ॥

सीतादेवीसमाश्रयः पण्डितानां मनोहरम् ।
सीतास्वयंवरं कुर्वे काव्यं कर्णरसायनम् ॥

---

## ॥ राजाशीर्वादः ॥

जयतु जयतु राना राजधर्माभिनायो
जयतु बुधमनेज्यः सज्जनानां शरण्यः ।
जयतु विमलवृत्तश्चारुशीलः कृपालुः
स जयतु जयपूर्वश्चामराजेन्द्रभूपः ॥

---

BHARATIYA VIDYA BHAVAN
S N.. ..
LIBRARY

॥ श्री ॥



यत्कारुण्यवशान्मनोहरमिद काव्य नवीन रसै
सम्पूर्णं ह्यधुनागमत्परिणतिं स लोकनाथ सदा ।
सीतालक्ष्मणकैकयीसुतमुखैः संसेव्यमान मुदा
श्रीराम रमणीयशीलभरित वन्दे रघूणां पतिम् ॥



॥ पित्रोः पादारविन्दयोस्सादरं ॥
॥ सप्रश्रयं सभक्त्युन्मेषं ॥
॥ समर्पणम् ॥





Pandit Sri K Sesha Iyer, Vaidyavara





Sri Nagammal

विप्रान्वये विश्वगुणाभिदीप्ते जातं सदाचाररतं मदीयम् । आ शैशवाद्या मयि दिव्यवाणीप्रेमाङ्कुरं प्रीतिरसैरपुष्यत् ।
विद्यागुरुं वैद्यवरं च भक्त्या शेषाभिधानं पितरं नमामि ॥ नागाम्बिका प्रेममयीं प्रसूं मे वन्दे च तां भक्तिनतोऽस्म्यहम् ॥

# ॥ श्रीसीतास्वयंवरम् ॥

## ॥ प्रथमस्सर्गः ॥

### ॥ विश्वामित्रागमनम् ॥

श्रीमण्डितां चण्डतपःप्रभावस्सभामथो पङ्क्तिरथस्य राज्ञः ।
विवेश गाधिप्रभवो महात्मा मुनिस्सुधर्मामिव कुम्भजन्मा ॥१॥

सुमन्त्रमन्त्रिप्रवरैर्निविष्टां लक्ष्म्या गिरां देवतया च दीप्ताम् ।
सर्वत्रचित्राञ्चितभित्तिभागां दीव्यन्मणिस्तम्भविभूषितान्ताम् ॥२॥

पयोधिकल्पां मणिभिर्महार्घैर्विभाकराभां किरणैस्सहस्रैः ।
चन्द्रोपमां प्रस्रवदिन्दुकान्तशिलाभिराश्चर्यनिधिं मनोज्ञाम् ॥३॥

अनेकसामन्तनृपोत्तमाङ्गराजत्प्रभापुञ्जकिरीटवृन्दैः ।
नतैः प्रकाशीकृतसार्वभौमश्रियं प्रजारञ्जनमूलहेतुम् ॥४॥

चलत्पताकाभिरनेकवारं प्रीत्या समाहूतसुरेन्द्रमुख्याम् ।
सिंहासनाधिष्ठितराजमूर्तिं स्वर्गेऽपि संभावितभूरिकीर्तिम् ॥५॥

दृष्ट्वा द्विजश्रेष्ठमरिन्दमोऽथ संत्यक्तपीठो विनतोत्तमाङ्गः ।
स्तुत्या प्रणामं विततान तस्मै शीर्षालिसंचुम्बिततत्पदाब्जः* ॥६॥

ततोऽर्घ्यपाद्यादिकसत्क्रियाभिराराध्य हेमासनसन्निविष्टम् ।
बद्धाञ्जलिर्भक्तिपरेण भूपस्तदाज्ञया स्वासनमाससाद ॥७॥

---

* कोटीररत्नांशुविभासिताङ्घ्रिः ॥६॥

राजाधिराजो विनयावनम्रो महामुनेरागमनस्य हेतुम् ।
संप्रष्टुकामः परिपूर्णकामं मुनिं महात्मानमिदं बभाषे ॥८॥
रुद्राक्षमालाञ्चितकण्ठदेशं जटाकलापेन किरीटवन्तम् ।
कौपीनवन्तं कुशिकात्मजं त्वां द्रक्ष्यामि साक्षादिव नीलकण्ठम् ॥९॥
*मन्ये भवद्दर्शनहेतुनाहं संभाविनात्मानमनिन्दित माम् ।
करोति जन्मान्तरलब्धभाग्यफलोदयं त्वादृशदर्शनं मे ॥१०॥
अन्धो यथा लोचनयुग्मलाभात् धनागमाज्जातु यथा दरिद्रः ।
यथाब्जवृन्द रविरश्मिपातात् त्वत्तस्तथाहं मुनिवृन्दवन्द्य ॥११॥
प्रजास्समस्ताः परमस्मदीया वरूथिनीयं च सुरार्चिताङ्घ्रे ।
प्रतीक्षमाणास्तव शासनानि† सर्वं त्वदायत्तमिदं हि राज्यम् ॥१२॥
त्वत्पादधूलीकणसङ्क्रमणात् गृहं मदीयं परिपूतमद्य ।
भवादृशानां परिचर्ययैव ख्याता बभूवुर्मम पूर्वजाताः ॥१३॥
इच्छामि तस्मात्करुणाम्बुधेऽहं ज्ञातुं यदृच्छागमनस्य हेतुम् ।
कारुण्यवर्षं मयि वर्षय त्वं यथा मुकुन्दो गजकुम्भसीम्नि ॥१४॥
कुशाग्रबुद्धिः कुशलं महर्षिः पप्रच्छ राजर्षिमथाचचक्षे ।
द्विजावलिद्योतितवक्त्रपद्मे पद्मासनार्घाङ्घ्रपूर्वं निषेव्य ॥१५॥
जातोऽस्मि राजन् रघुवंशकेतो सन्तुष्टचित्तस्तव भाषणेन ।
मनोरथो मे फलतीति बुद्ध्या त्वत्तो महीपाल समागतोऽस्मि ॥१६॥

---

*मन्ये भवद्दर्शनभाग्यभाजं धात्मानमापादितमुत्कटं भोः ।
आलोकसम्भावितमुख्यवाक्य जन्मान्तरानुष्ठितसत्क्रियाभिः ॥
†त्वदाश्रितमेतदखिलं हि राज्यम् ॥

यदा यदैवाध्वरदीक्षितोऽहं तदा तदा रावणबन्धुमुख्याः ।
सुबाहुमारीचमुखाः पलादा न्यपातयन्नूनमसृक् पलादि ॥१७॥

इत्थं विनष्टे रुधिरामिषैर्यज्ञे मदीये रजनीचराणाम् ।
जितेन्द्रियस्यापि जितेन्द्रतेजश्चिन्तावशं मे हृदयं जगाम ॥१८॥

श्रुत्वा नरेन्द्रस्तु मुनीन्द्रवाक्यं विस्मेरचेता इदमाबभाषे ।
किं ते पलाशास्तव कोपवह्नेस्तापप्रतापेन न नाशितास्स्युः ॥१९॥

पृच्छन्तमेवं मनुजाधिनाथं हृष्टो मुनीन्द्रः प्रतिवाचमूचे ।
सुष्ठु त्वया पृष्टमरातिभीष्म शृण्वत्र हेतुं प्रवदामि सर्वम् ॥२०॥

दृष्ट्या प्रतीच्या किल दानवानां तेषां विदित्वा मरणं महीश ।
ददामि शापं न च कोपवह्निं जहामि तेषु क्षणदाचरेषु ॥२१॥

याचे रघूणां तिलकायमानं रामं विरामं विपदां जनेश ।
बालोऽपि रक्षोनिधनं विधातुं प्रभुर्भवेन्नूनमविन्ध्यधन्वा ॥२२॥

एकाश्रमद्योतितमाश्रमं मे गतश्रमं कल्पयितुं विहाय ।
रामं विचिन्वन्विनयाभिरामं राजन् भवत्सन्निधिमागतोऽहम् ॥२३॥

जानामि रामं तव पुत्रभूतं विभुं पुमांसं परमं पुराणम् ।
रक्षोविनाशाय कृतावतारं समस्तलोकप्रियकारणार्थम् ॥२४॥

तत् प्रतिज्ञामनुसृत्य तस्मात् द्रुतं प्रपन्नो मम भूपनम्य ।
राजीवनेत्रं तव रामचन्द्रं सार्धं मया प्रेषितुमर्हसीति ॥२५॥

पीयूषकल्पे मुनिसत्तमेन्द्रभाषाविषर्येऽप्यतिशोकतप्तः ।
सूनोर्भवित्रा विरहेण राजा मोहावलिप्तो निपपात भूमौ ॥२६॥

प्रीत्या स पश्चान्नृपतिस्तनूजे स्वीयानि सर्वाणि सुभाषितानि ।
पुरो भवन्तं पुरुहूततुल्यं बभाण विस्मृत्य रघुप्रवीरः ॥२७॥
पुत्रो ममायं खलु रामचन्द्रश्शास्त्रास्त्रशास्त्रेष्वपि षोडशवर्षी ।
कथं मुने राक्षससैन्यसिन्धोरशक्तो भविष्यन्त्यभिशोषणाय ॥२८॥
क्व राक्षसानामतिघोरसेना क्व मानवो मेऽल्पवयाः कुमारः ।
नराशनास्ते तु मयाप्यजय्या. कथं हि रामेण विनाशितास्स्युः ॥२९
विहाय रामं सकलाभिरामं शक्तो मुने धारयितुं शरीरं ।
प्राणाश्च तस्माद्दयया दयाब्धे प्रसीद साष्टाङ्गनतीस्तनोमि ॥३०॥
सैन्येन सार्धं सवनावनार्थं पलाशनाशाय कृतप्रयत्नः ।
समागमिष्याम्यहमाश्रमं ते दासे जनेऽस्मिन् कृपणे प्रसीद ॥३१॥
रामं विना सर्वमहं मदीयं ददामि सत्येन शपे महर्षे ।
ममापराधं सकलं क्षमस्व क्षमावन क्ष्मापतिवृन्दपूज्य ॥३२॥
यदा महर्षेः श्रवसोस्प्रकाशं नरेन्द्रवाणी किल सङ्गताभूत् ।
तदा क्रुधा शोणितलोचनाब्जो रुद्रो यथा वा स बभौ महात्मा॥३३॥
कल्पान्तरुद्रोपममूर्तिमेनं दृष्ट्वा सभायां सभयाः प्रभास्ताः ।
यथाटवीभूमिगताः कुरङ्गाः क्षुधार्दितं केसरिणं तथाप्न ॥३४॥
देवेन्द्रलोके कुशिकात्मजस्य कोपानलस्फीतभयात्कराळः ।
सर्वे सुराः किन्नरयक्षसिद्धाः संभ्रान्तचित्ताः परितो बभ्रुः ॥३५॥
पूर्वप्रतिज्ञामपहातुमिच्छन् विशुद्धवंशे कुरुषे कलङ्कम् ।
रामं न यच्छेरपि यामि राजन् सुखी भव त्वं निजबन्धुयुक्तः ॥३६॥

उक्तेति राजानममर्षवेगं निगृह्य सादी तुरगं यथा वा ।
विसृज्य हेमासनमुद्यतोऽभूत् यथागतेनैव पथा प्रयातुम् ॥३७॥
कुमारवात्सल्यविमूढमेकं रुषातिरक्तीकृतनेत्रमन्यम् ।
दृष्ट्वा वसिष्ठो नृपमाचचाषे वाचस्पतिर्देवपतिं दिवीव ॥३८॥
पूर्वं प्रतिश्रुत्य समस्तमस्मै किमद्य मिथ्याकुरुषे नृपेन्द्र ।
यातुं सदाचारपथात्सुदूरं किमिच्छसीनान्वयकिल्बिषं च ॥३९॥
जानासि नैनं किमु तापसेन्द्रं महाबलं चाद्भुतविक्रमार्कम् ।
विसर्जनेनैव सुतस्य मन्ये शक्योऽस्य मन्युर्भवता विनेतुम् ॥४०॥
किं शङ्कसे बाल इति प्रभुं तं रामं महासत्वमसत्यशत्रुम् ।
पराक्रमं ते तनयस्य वेत्ति ह्ययं महर्षिर्जितकोपतापः ॥४१॥
राजन् तनूजं तव विद्धि साक्षात् श्रियःपतिं राक्षसनाशहेतुम् ।
स्थातुं यदग्रे न हि शक्नुवन्ति प्रचण्डसूर्यस्य पुरस्सुरा वा ॥४२॥
शिलीमुखानां च शतं सहस्रं जयाभिधानां खलु सौप्रमाणाम् ।
शस्त्रास्त्रविद्यानिपुणो महर्षिर्नानात्ययं वह्निसमप्रभावः ॥४३॥
राजन् तनूजस्तव चास्य पार्श्वे तिष्ठन् कांश्चिद्विपदं समेति ।
यथा स नारायणपार्श्ववर्ती प्रह्लादभक्तस्सततं तथा स्यात् ॥४४॥
अयं महात्मा तव पुत्रकाङ्क्षी शुभं सदा तस्य करोति दक्षः ।
राजानमादिश्य विसर्जयेति रामं वसिष्ठो विरराम पश्चात् ॥४५॥
निशम्य वाचस्पतिवाक्यतुल्यां गुरोर्मुखान्निस्सृतवाक्यपङ्क्तिम् ।
राजीवनेत्रं मुनये प्रदातुं राजाधिराजस्स मनश्चकार ॥४६॥

ततो नृपालः किल किङ्करैश्च श्रीरामचन्द्रानयनं चकार ।
आहूतमात्रेण पुरस्स भूत्वा भक्त्या ववन्दे पितृपादयुग्मम् ॥४७॥

तेनागतस्सार्धमरिंदमेन ज्येष्ठानुरक्तः पितरं ववन्दे ।
छायेव तं राममनुप्रयातुं सज्जो बभूवाथ स लक्ष्मणोऽपि ॥४८॥

कृतप्रणामं रघुवंशरत्नं सलक्ष्मणं लक्षणलसिताङ्गम् ।
शीर्षे समाघ्राय मुनेः कराब्जे दत्वा बभाषे वचनं स राजा ॥४९॥

जयश्रिया मण्डितसर्वगात्रो पित्रान्वये निर्मलकीर्तिदीप्तः ।
जयान्निवर्तस्व मदन्तिकं त्वं त्वद्दर्शनेनैव मनस्स्ववश्यम् ॥५०॥

कुमार मारप्रतिमामरेड्यं जितारिषड्वर्गममुं महर्षिम् ।
भक्त्याभियातो भव सानुगस्त्वं सदा मुदं कर्तुमनाश्च तस्य ॥५१॥

गणैर्गुणानां विनयादिमानां सदानुतिष्ठन् भव तापसाज्ञाम् ।
यथा मयि त्वं बहुभक्तियुक्तस्तथा मुनौ सर्वविदीश्वरेऽस्मिन् ॥५२॥

इत्याशिषा सर्वगुणाभिरामः पित्रानुशिष्टो मनुवंशवीरः ।
निधाय चाज्ञां विमले तदीयां शीर्षे ययौ भूर्यनुजेन साकम् ॥५३॥

प्रस्थानपूर्वं जननीकृतानि स्वाशीर्वचांस्येव हि लब्धुकामौ ।
तासां सकाशं ययतुर्नृसिंहौ सिंहोपमौ सिंहगती कुमारौ ॥५४॥

यथाक्रमं विश्वभूषणाढ्यौ प्रणेमतुर्मातृजनस्य भूयः ।
पादाब्जयोः प्रीतिभरेण बालावबालिशौ कैतवमानुषौ तौ ॥५५॥

राज्ञ्यो रघूणामधिपस्य दृष्ट्वा कुमारयुग्मं विधुसौम्यवक्त्रम् ।
नतोत्तमाङ्गं मृदुमञ्जुलाङ्ग्यो भुजान्तदेशे भृशमालिलिङ्गुः ॥५६॥

अङ्के निधाय तनयं रघुवंशवीरं
माता तु तस्य रमणीयशिरःप्रदेशम् ।
आघ्राय पूर्णविधुतुल्यकपोलयुग्मं
प्रीत्या कुमारसमशौर्यनिधिं चुचुम्ब ॥५७॥

आशीर्गिरं हि तदनन्तरमस्य माता
पुत्रे सहोदरयुते विदिदेश चैवम् ।
गत्वा समं च मुनिना कुशिकात्मजेन
क्षिप्रं सुत प्रतिनिवृत्य लभस्व कीर्तिम् ॥५८॥

रामोऽभिरामवदनो दनुसंभवानां
नाशाय निश्चितमतिर्वशिनां वरिष्ठम् ।
चण्डांशुवंशगुरुमात्मगुरुं प्रणम्य
प्रातष्ठ प्रज्वलितसन्नहृ सोदरेण ॥५९॥

अशी किरीटपरिभूषितशीर्षदेशौ
कोदण्डबाणसहितौ नृपनन्दनौ तौ ।
गत्वाथ कौशिकमुनेर्निकटं सहर्षा-
वाज्ञाप्रतीक्षणरतौ विनतावभूताम् ॥६०॥

राजीवरम्यनयनावथ कौशिकोऽपि
राजाधिराजतनयौ विमलौ समीक्ष्य ।
आपृच्छ्य भूमिरमणं नगराद्ययासीत्
ताभ्यां सहैव भगवान् द्रुहिणस्तदस्तः ॥६१॥

कुशिकतनयमेवं राघवाभ्यां स राजा
मुदितहृदययुक्तं सुप्तु चक्रे यदैव ।
मृदुनिनदसमेता हर्षचिह्नं सुराणा-
मपतदमृतगर्भा श्रीधरी पुष्पवृष्टिः ॥१२॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

इति श्रीसीतास्वयंवरे महाकाव्ये श्र्यङ्के विश्वामित्रागमनं

॥ नाम प्रथमस्सर्गः ॥

---

॥ द्वितीयः सर्गः ॥

॥ ताटकासंहरणम् ॥

काकपक्षकमनीयमस्तकौ चण्डभानुकुलकीर्तिवर्धकौ ।
विघ्ननायकगुहौ शिवं यथा तौ महामुनिमथान्वगच्छताम् ॥१॥

गाधिसूनुरवदद्रघून्दहं प्राप्य रम्यसरयूतटं ततः ।
वत्स राम मम भारतीमिमां लक्ष्मणेन सहितः शृणु क्रमात् ॥२॥

राम ते भवति विक्रमो बलं ह्येतया च शुभया शुभं सदा ।
तत्त्वमद्य विमलां द्रुतं बली बालकोऽप्यतिबलायुतां बलाम् ॥३॥

ज्ञातुमर्हसि मया परात्परां लक्ष्मणेन सह राघवोद्भव ।
पीड्यसे न च पिपासया रुजा नैकदापि दनुजैश्च जीयसे ॥४॥

विद्ययोरपि बलाच दुर्विधिर्नाशमेति सहसा न संशयः ।
अन्धकार इव दीपदर्शनात् क्षीयते त्वरितमेव दुष्करम् ॥५॥
मातृमन्त्रिविसुखानि विन्दसे विद्ययोः परमयोः प्रभावतः ।
नैकदापि पथि चास्ति ते श्रमस्त्वत्समोऽपि भुवि नैव वर्तते ॥६॥
दर्भपत्रमयविष्टरे स्थितः पाणिपङ्कजतलेऽपलं जलम् ।
प्रोक्ष्य वत्स रघुवीर सानुजो मन्त्रमेनमतिनिर्मलं शृणु ॥७॥
राघवोऽतिमधुरां सुखावहां तापसोत्तममुखाद्विनिर्गताम् ।
आकलय्य मुदितस्सरस्वतीं भक्तिनम्रवदनस्स चाग्रहीत् ॥८॥
तत्र रात्रिमतिवाह्य बालकौ राघवौ परमपावनप्रभौ ।
प्रातरर्घ्यविधिना यथाक्रमं शंसतस्स्म दिननाथमादरात् ॥९॥
भ्रातरावनुगतौ महामुनिं तत्र तत्र सुषमां वनावनेः ।
वीक्ष्य वीक्ष्य मुदितौ परस्परं चेत्थमभ्यवदतां पथि स्थितौ ॥१०॥
प्रीतिपात्र कुरु दृष्टिगोचरं वृक्षशाखिनमिहाखिलाश्रयम् ।
वल्लरीभिरमलाभिरावृतो भाति तात इव नौ प्रजाश्रयः ॥११॥
राजहंसमिथुनं जलाशये केलिमग्नमतिनिर्भरं वने ।
आयताक्ष च तवाक्षिगोचरं ह्यातनुष्व कुरु मे मुदं ततः ॥१२॥
पश्य मे प्रियतमात्र मालतीमावृतां मधुकरैश्च मल्लिकाम् ।
यत्सुमैरिह तपोधनास्सदा पूजयन्ति जगतामधीश्वरम् ॥१३॥
गीतिमत्र भ्रमरगणैः कृतां सन्निधिं तव समानय श्रुतेः ।
भारतीकरसरोजवल्लकीनादमेव बहुशोऽनुकुर्वतीम् ॥१४॥

तापसाढ्ययुतां तपोऽवनिं सप्तपर्णमुखवृक्षसङ्कुलाम् ।
वीक्ष्य मे मुदमतीव मानसं विन्दते किल महत्तपोबलम् ॥१५॥

इत्थमेव रमणीयरूपयोः कुर्वतोश्च रमणीयमापणम् ।
आश्रमः प्रसभमाचकर्ष तल्लोचनानि पथि मञ्जुलाकृतिः ॥१६॥

आश्रमस्य निकटं च तौ गतौ कौतुकेन मुनिमेवमूचतुः ।
सत्कथास्य भवनाद्य कथ्यतामावयोः श्रवणतोषकारिणी ॥१७॥

कस्य चैतदुटजं महात्मनः कौतुकेन बहलेन चोदितौ ।
तद्भवान्हि दयया करोतु नौ ज्ञाततन्महितजीवितौ मुने ॥१८॥

चोदितो रघुवरेण तापसः सत्कथाश्रवणकौतुकेन सः ।
आश्रमस्य सकलां कथां ततः कर्णयोर्निकटमानिनाय च ॥१९॥

अध्युवास रघुवीर शङ्करो यज्ञनष्टदयितो कुटीमिह ।
पर्वताधिपतिकन्यका सदा यं चकार मुदितं स्वसेवया ॥२०॥

नैकदापि समवाप तापसो विघ्नमत्र करुणाब्धिरीश्वरः ।
सेवितोऽपि गिरिनायकन्यया नैव धीरचरितो विमुह्यति ॥२१॥

तारकासुरपराक्रमं सुराः पद्मयोनिवरदत्तमाहवे ।
सेहिरे न शरणं ततो ययुस्तं भिया परिहताः स्वयंभुवम् ॥२२॥

सोऽपि तानसुरवीर्यतर्जितानादिदेश शरणं तपःस्थितम् ।
शङ्करं भुवनशङ्करं विभुं गन्तुमेव विबुधानिहाश्रमे ॥२३॥

तत्र यातुममरास्त्रिलोचनं रामचन्द्र तपसि स्थितं शिवम् ।
साध्वसाच्च न बभूवुरुत्सुका भीमसर्पमिव मान्त्रा भुवि ॥२४॥

चिन्तयत्सु विबुधेषु सन्ततं शम्बरारिरथ चैवमब्रवीत् ।
चिन्तयालमहमद्य सायकैः साधयामि विजयं सुमाङ्कितैः ॥२५॥

किन्तु मे चरतु माधवः पुरस्तेन साकमहमानयामि तम् ।
पुष्पबाणसहितायुधोऽप्यहं सर्वलोकनिधनप्रभुं वशम् ॥२६॥

इत्युवाच मदनस्तमाधवो माधवेऽस्यमसुमस्त सायकैः ।
नेतुमात्मवशमाजगाम च प्रेरितोऽथ विधिना पुरो बभौ ॥२७॥

पुष्पपूर्णविटपा महीरुहा मीनकेतुविशिखाभिताडिताः ।
माधवातिविभवे समुर्वने चैत्रहीनसमयेऽपि चित्रता ॥२८॥

मालतीकुसुमसंचयं तदा वीक्ष्य रन्तुमनसो मधुव्रताः ।
केचिदात्मदयितानुसारिणो तत्र पेतुरथ हुहूते रवैः ॥२९॥

शीतभानुरतिनिर्मलाम्बरे कैरवावलिमतीव तोषयन् ।
नर्तनं हृदयहारि कामिनां तारकापरिवृतोऽकरोन्निशि ॥३०॥

चक्रवाकमिथुनं दिवा वने पुष्परम्यसहकारभूरुहे ।
आत्मनो रतिरसं पिबत्सुखं वेत्ति न स्म बहुकालमप्यहो ॥३१॥

कामवैभवमवेक्ष्य चाययौ मञ्जुलं विबुधकामिनीमनः ।
चित्ररम्यपरिधानभूषितस्तद्वनं प्रियसमागमेच्छया ॥३२॥

तेषु काचिदबला शिलातले नीलनीरदनिभालकावलिः ।
गण्डचुम्बिमृदुहस्तपल्लवा पल्लवावृतलतेव राजिता ॥३३॥

काचिदम्बुजविशाललोचना भाविभोगपरिभावितान्तरा ।
इच्छमी प्रियसमागमात्सुखं तत्प्रियाप्रतिनिरीक्षणेऽक्षत ॥३४॥

एत्य काचिदमरी लतागृहं तत्र रम्यकुसुमानि सुन्दरी ।
सङ्ग्रहीतुमभिसङ्गता यदा षट्पदेन परिदष्टचूचुका ॥३५॥
पाटलाधरपुटामराङ्गनानङ्गबाणपरिविद्धमानसा ।
कान्तमत्र विषये न वीक्ष्य सा दानपूर्णकरिणीनिभा बभौ ॥३६॥
चम्पकादिसुमनोऽभिमण्डिता चम्पकस्तबकतुल्यनासिका ।
भोगिभोगसमकान्तबाहुना वेष्टितान्यवनिता बभौ वने ॥३७॥
स्वर्णनूपुरविभूषिताङ्घ्रिणा निस्वनं रशनया चकार च ।
तूर्यघोषमिव मन्मथोत्सवं तद्वने मदनमावसावृते ॥३८॥
अत्र पञ्चविशिखस्समाधवो सर्वभूतनिचये स्वमार्गणैः ।
संकिरन् प्रियमथागमे रतिं चाययौ भुवननोपसन्निधिम् ॥३९॥
भस्मलेपसितविग्रहे निजे पन्नगैरसितवर्णकान्तिभिः ।
भूषितं शतफणामणिप्रभैर्भासमानमिव भानुमम्बरे ॥४०॥
वेष्टितं च गजराजचर्मणा कोटिपावकसमां निजां रुचिम् ।
काननेऽखिलतमोविनाशने योजयन्तमिव संस्थितं प्रभुम् ॥४१॥
मालया च शिरसां विभूषितं चन्द्रमश्शकलशेखरं हरम् ।
पूजनीयमपि तापमोत्तमैस्तापसोत्तममिवोज्ज्वलं शिवम् ॥४२॥
ईश्वरोऽपि स हि केन हेतुना चेष्टते तपसि घोरकर्मणि ।
पश्यतः खलु जनस्य मानसे संशयस्य जनयन्तमङ्कुरम् ॥४३॥
माधवेन सहितो मनोभवश्चैवमत्र विपिने स्थितं स्थिरम् ।
दृष्टिगोचरमगोचरं विभुं तं चकार च शरं द्रुतं नहौ ॥४४॥

स क्रुधा लघु ललाटलोचनः प्रोन्मिमील च ददर्श नापि कम् ।
आशुशुक्षणिमथाशु सर्वगोऽप्युत्ससर्ज रिपुनाशनोद्यतम् ॥४५॥

रुद्रभालनयनोद्गतोऽनलः पञ्चमार्गणविमार्गणाय सः ।
चूतवृक्षपरिगुप्तविग्रहं भस्मसात्समकरोच्च तत्क्षणात् ॥४६॥

राम तत्प्रभृति चैतदाश्रमं श्रूयतेऽत्र खलु मन्मथाख्यया ।
यत्र गात्रमभवन्मनोभुवो नामशेषमनलेन नाशितम् ॥४७॥

राजपुत्रसहितं मुनीश्वरं मन्मथाश्रमनिवासिनस्ततः ।
पूजया परमयैव तुष्टुवुर्ब्रह्मविष्णुसहितं शिवं सुराः ॥४८॥

ते मुनीन्द्रवसुधेन्द्रबालकाः पूजया परमपूतया तया ।
रेमिरेऽथ परितुष्टमानसाः सत्कथाश्रवणकौतुकेन च ॥४९॥

अत्र रात्रिमतिवाह्य बालकौ सन्तराम सरितं दिनोदये ।
हासपूर्वगिरमित्युदीरितां तौ निशम्य मुनिना निदद्रतुः ॥५०॥

आननं निशि कुशैरलंकृते राघवस्य शयने विधूपमम् ।
वीक्ष्य सारसततिर्निमीलिता नोत्सुकेव सहसा पतिव्रता ॥५१॥

शीतभानुरपि भानुसन्निभं सुप्रभातसमये विभोर्मुखम् ।
शक्तिहीन इव तत्प्रबोधनात् द्रष्टुमस्तशिखरं विशिश्रिये ॥५२॥

प्रातरन्यदिवसे दिनेश्वरं वन्दनेन मुनयो ह्यतूतुषन् ।
तावुभावपि नृपेश्वरात्मजौ चक्रतुश्च गमनाय मानसम् ॥५३॥

आविवेश कुशिकात्मसंभवो नावमप्रतिमरंहसा युताम् ।
रामलक्ष्मणयुतो मुनीश्वरैः पूजितश्च तरति स्म निम्नगाम् ॥५४॥

एत्य काचिदमरी लतागृहं तत्र रम्यकुसुमानि सुन्दरी ।
सङ्ग्रहीतुमभिसङ्गता यदा षट्पदेन परिदष्टचूचुका ॥३५॥
पाटलाधरपुटामराङ्गनानङ्गबाणपरिविद्धमानसा ।
कान्तमत्र विषये न वीक्ष्य सा दानपूर्णकरिणीनिभा बभौ ॥३६॥
चम्पकादिसुमनोऽभिमण्डिता चम्पकस्तबकतुल्यनासिका ।
भोगिभोगसमकान्तबाहुना वेष्टितान्यवनिता बभौ वने ॥३७॥
स्वर्णनूपुरविभूषिताङ्घ्रिणा निस्वनं रशनया चकार च ।
तूर्यघोषमिव मन्मथोत्सवे तद्वने मदनमाधवावृते ॥३८॥
अत्र पञ्चविशिखस्समाधवो सर्वभूतनिचये स्वमार्गणैः ।
संकिरन् प्रियसमागमे रतिं चाययौ भुवननोपसन्निधिम् ॥३९॥
भस्मलेपसितविग्रहे निजे पन्नगैरसितवर्णकान्तिभिः ।
भूषितं शतफणामणिप्रभैर्भासमानमिव भानुमम्बरे ॥४०॥
वेष्टितं च गजराजचर्मणा कोटिपावकसमां निजां रुचिम् ।
काननेऽखिलतमोविनाशने योजयन्तमिव संस्थितं प्रभुम् ॥४१॥
मालया च शिरसां विभूषितं चन्द्रमश्शकलशेखरं हरम् ।
पूजनीयमपि तापमोक्तृभिस्तापसोत्तममिवोज्ज्वलं शिवम् ॥४२॥
ईश्वरोऽपि स हि केन हेतुना चेदृशे तपसि घोरकर्मणि ।
पश्यतः खलु जनस्य मानसे संशयस्य जनयन्तमङ्कुरम् ॥४३॥
माधवेन सहितो मनोभवश्चेशमत्र विपिने स्थितं स्थिरम् ।
दृष्टिगोचरमगोचरं विभुं तं चकार च शरं द्रुतं जहौ ॥४४॥

पादपातिनिबिडीकृतं वनं नाविशद्दिनपतेः प्रभावलिः ।
मोहजालकलुषीकृतं मनो मोक्षमार्गनियमावलिर्यथा ॥६५॥

वत्स पूर्वमुरुसंपदामभवत् कश्चिदत्र विषयस्समृद्धिमान् ।
इत्यमस्य चरितं यथाक्रमं वक्तुमारभत तापसोत्तमः ॥६६॥

वृत्रदैत्यमसुवर्जितं यदा जम्भशत्रुरकरोत्पवेर्बलात् ।
ब्रह्ममारणजकिल्बिषावृतः पीड्यते स्म स मलेन च क्षुधा ॥६७॥

पीडितं सुरपतिं सुरास्ततस्तन्मलेन च वितप्तमानसम् ।
तापसाश्च विमलं गतक्षुधं चक्रुरेनमथ पावनोदकैः ॥६८॥

पूतदेहविभवेन भास्वता जिष्णुनाथ मुदितेन पूजितः ।
तस्य पङ्कहरणेन राजितो भाति चैष विषयो रघूद्वह ॥६९॥

तत्तदाप्रभृति राष्ट्रयोर्द्वयोरेकराष्ट्रमभवन्मलप्रदम् ।
संज्ञयेति करुशास्तथापरं ज्ञायते किल समृद्धिपूरितम् ॥७०॥

ताटकाख्यरजनीचरी ततो मत्तवारणसहस्रविक्रमा ।
प्राविशच्च विषयद्वयं यथा नीलकण्ठशुभकन्धरं विषम् ॥७१॥

राक्षसः किल सुकेतुसंज्ञितो राम पूर्वमभवन्महाबलः ।
आत्मजोत्सवतृषा स पीडितः पद्मपीठशरणं ययौ शुभम् ॥७२॥

तस्य शुद्धतपसा प्रजापतिर्भूरितुष्टहृदयः पुरो बभौ ।
दर्शने दशशतेभविक्रमां ताटकाख्यतनयामदात्ततः ॥७३॥

सा तु सुन्ददयितातिसुन्दरे कानने विगतवैभवे व्यधात् ।
एकदा वनजनान्तकारिका सूनुमेव सुषुवे भयङ्करम् ॥७४॥

सा हि सूतमहिता विनाशयत्यद्य देशयुगलं समृद्धिमत् ।
क्रूरयातिविफलीकृतावनिर्भासते ननु निशेव तामसी ॥७५॥
गर्वपूर्णहृदया निशाचरी कुम्भसम्भवविधर्षणोद्यता ।
तत्सकाशमगमत्तनूभुवा सा सहेव शलभस्तु पावकम् ॥७६॥
रजोगुणाढ्यां रजनीचरीं तां पुरःस्थितां पुत्रयुतामगस्त्यः ।
दृष्ट्वा विहस्याथ शशाप साकं पलाशनी चात्मभुवा भव त्वम् ॥७७॥
शप्ता तु यक्षी तनयेन सार्धं मध्ये वनेऽस्मिन् मुनिसर्वसद्मम् ।
देशाविमौ च प्रथमातवेगा निमज्जयत्यापदुदन्वतीह ॥७८॥
तस्मात्त्वमद्यैव रघुप्रवीर भ्रष्टां च दुष्टां कुपथे प्रविष्टाम् ।
धर्माधिनाथस्य सकाशमेनां संप्रेष्य सर्वं हर साधुदुःखम् ॥७९॥
नारीति बुद्धया विवशेति वापि क्षमस्व तां नैव कदापि राम ।
नीचां च सन्मार्गविरुद्धशीलां बाणास्तवाद्यैव विदारयन्तु ॥८०॥
वध्या सदा स्त्री खलु दुश्चरित्रा मातापि भार्या भगिनी तथैव ।
स्वमातरं भार्गववंशरामः पुरा जघानेति च विश्रुतं नु ॥८१॥
मच्छासनाद्राघव शीघ्रमेनां शिलीमुखैस्तीक्ष्णतमैर्जहि त्वम् ।
लोकोपकाराल्लभसे च कीर्तिं महीयसीं तापसकीर्तनीयाम् ॥८२॥
रामोऽतिनम्रो विनयाभिरामः पितुर्निदेशाच्च तपोधनस्य ।
जग्राह चापं सहसैव शार्ङ्गं हसन्मुरारिर्दनुजेन्द्रवैरी ॥८३॥

धर्माभिपूरितवचोभिरतीव रम्यैः
सन्तोषयन् मुनिमनिन्द्यतपःप्रभावम् ।

धृत्वा धनुर्निजकरे दनुजां स हन्तुं
ज्याघोषमद्भुततमं विपिने चकार ॥८४॥

निद्रारता वनगजा निनदं हि तस्य
कण्ठीरवध्वनिसमं विनिशम्य वेगात् ।
प्राणावने कृतधियः किल कान्दिशीकाः
संदुद्रुवुश्च शतशोऽपि विधूतशुण्डाः ॥८५॥

कान्तास्तदातिभयदं हि भयस्वभावाः
कान्तारभूमिमखिलां परितः सरन्तम् ।
श्रुत्वा रघूद्वहधनुर्जनितं निनादं
कान्तान् विकम्प्रतनवो भृशमालिलिङ्गुः ॥८६॥

नागाशना गुणरवं रघुनायकेन
प्रावृड्घनध्वनिसमं रचितं निशम्य ।
आनन्दसान्द्रहृदया वनमध्यभागे
नाट्यं वितेनुरथ विस्तृतचारुपिञ्छाः ॥८७॥

आकर्ण्य सा झटिति चापरवं महान्तं
व्यात्तानना विकटशब्दमयं ररास ।
कोपातिरेककलुषीकृतलोचनान्ता
लोकैकनाथनिकटं निरगान्मदान्धा ॥८८॥

दृष्ट्वा नृपसूनुतनयौ रिपुमर्दनौ तौ
सा ताटका बहलकोपविघूर्णिताक्षी ।

मत्तद्विपेन्द्रमहिषीव मृगेन्द्रपोतौ
संहर्तुमैच्छदसकृत्कृतसिंहनादा ॥८९॥

पश्चान्महामुनिपुरक्षिनचित्रशालौ
दृष्ट्वासुरी द्विरमितर्धितकोपदग्धा ।
भीमैं रवैश्च तुमुला हरितो विधाय
ग्रावाभिवर्षमसृजत्सुरलोकशत्रुः ॥९०॥

पाषाणवर्षमभिवीक्ष्य भयङ्करं तद्
रामो ह्मशिशितबाणचयैर्बिभेद ।
रात्रिंचरी तु पदताडनमेव भूमौ
कृत्वा रजःकणचयं विवृतं चकार ॥९१॥

जामातरं हि भवितारममुं विदित्वा
विश्वम्भरातिभयदं निचुषारिरूपम् ।
रामस्तु वीक्ष्य न भयं लभतामितीव
चक्रेऽन्तरं किल तयो रजसाभिपूर्णम् ॥९२॥

क्रुद्धस्तदा रघुकुलाम्बरचण्डसूर्यः
तस्यास्तु कर्णकुचखण्डनमेव शीघ्रम् ।
आदिश्य कर्तुमनुजं स्वयमूरुयुग्मं
पाणी बिभेद शरसंचयमोचनेन ॥९३॥

बाणप्रनष्टकुचकर्णमुखैर्निजाङ्गैः
विस्ताविनैश्च बहुशो रुधिरप्रवाहैः ।

सिक्ता बभौ मलकरूशजनान्तमार्गे
तस्मिन् यथा कुसुमभूषितकिंशुकालिः ॥९४॥
तेनातितप्ततनुशश्चिरमर्पपूर्णा
कण्ठीरवध्वनिनिभात्मविगर्जनेन ।
काष्टाङ्गनाः क्षुभितचित्तयुता विधाय
मायाविनी तु निमिषेण यथावदश्या ॥९५॥
नारीति राम करुणापरवानियां त्वं
क्षन्तुं कदापि मृदु तेऽद्य मनः कृथा मा ।
एवं मुनेर्वदननिर्गतरम्यवाणीं
श्रुत्वा तथेति च वधे विदधे मनः स्वम् ॥९६॥

मायाबलेन सततान्तरितस्वदेहां
रामो विचक्षणमतिर्बहुशास्त्रशास्त्रे ।
उद्दिश्य शब्दविषयं पटुधीर्महात्मा
नीचां मयङ्कखगेन जघान शीघ्रम् ॥९७॥

हा हा निनादमसुनिर्गमनाङ्कमस्याः
कर्णामृतं श्रुतिपुटैरिव सुष्ठु पीत्वा ।
स्वर्लोकनाथसहितास्त्रिदशा हसन्तः
श्रीराघवस्य निकटं सहसा समायान् ॥९८॥

शैलेन्द्रसन्निभशरीरमथावनौ तत्
निष्पातितं भगवती पृथिवी तु पश्चात् ।

तत्कालजेन रभसेन च ताडनेन
प्रावेपत प्रमुदिना खलनाशनेन ॥९९॥

कल्पद्रुमस्य कुसुमैरभिषिक्तगात्रौ
सन्तुष्टकौशिकमहामुनिना च सार्धम् ।
तत्रागतान् मघवदादिसुरान् कुमारौ
पूजाकमैर्ननुवतुर्बहुसंभ्रमेण ॥१००॥

पश्चान्महामुनिवरं वरदस्सुरेशः
रामाय दातुमनघांश्च भृशाश्वपुत्रान् ।
अभ्यर्थ्य नाकमसकृन्मुनिराजपुत्रा-
नापृच्छ्य सर्वविबुधैस्सह निर्जगाम ॥१०१॥

विजयविभवपूर्णौ पूर्णचन्द्रोपमास्यौ
दिनपतिकुलजातौ दीनबन्धू शरण्यौ ।
शरशरधिसमेतौ देवकार्योद्यतौ तौ
गुणगणविलसन्तावेकदा श्रीस्समागात् ॥१०२॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

॥ इति श्रीसीतास्वयंवरे महाकाव्ये द्व्यङ्के ॥

॥ ताटकासंहरणं नाम ॥

॥ द्वितीयस्सर्गः ॥

## ॥ तृतीयस्सर्गः ॥

## ॥ सवनावनम् ॥

जयश्रिया द्योतितवक्त्रपङ्कजौ नृपार्भकौ दाशरथी पुनः पुनः ।
शशाङ्कशोभातिमनोहरां भुवं समीक्ष्य संप्रापतुरञ्जसा मुदम् ॥१॥

तमालपत्राधिकभूषितालिकस्तमालनीलस्स तमालशाखिनाम् ।
तलेषु शीतेषु निषद्य राघवो गभीरवाचावरजं न्यभाषत ॥२॥

प्रियानुभाक्ष्णोः कमलायतेक्षण क्षपाकरेणाभ्युषितां च गोचरम् ।
चकासतीं प्राज्यमरण्यमेदिनीं कुरुष्व रम्यां मृगपक्षिसङ्कुलाम् ॥३॥

कदम्बकं कैरवपुष्पसन्ततेः स्फुटीवितन्वन् शशलाञ्छनो वने ।
विभाति रामानिचयं प्रमोदयन् यथा प्रसूनेषुरतीव मोहितम् ॥४॥

पयोमुचः स्पर्शनविक्रमेरिता विभान्ति यान्तो विमलेऽम्बरे प्रिय ।
निषादिहस्ताग्रुषपीडिता गजा रणाङ्गणे हीनजने यथा तथा ॥५॥

वनान्तभागे वनितान्तिके चरन्नयं मयूरो मकरध्वजार्दितः ।
भुजङ्गमभ्यङ्कगतं न खादति प्रियानुजैवं किल कामिनां गतिः ॥६॥

तपोबलादत्र विलोकयानुज मृगार्भकं बालमृगेशखेलितम् ।
जितेन्द्रिया यत्र तपांसि कुर्वते वसन्ति शेषास्तु गतारिभावनाः ॥७॥

घनाश्चरन्तः पवमानरंहसा नभोऽन्तराले सुषमाविराजिते ।
श्रमापनोदाय शिरःप्रदेशके सुखोपविष्टा इव भान्ति भूभृतः ॥८॥

समाप्य रम्यां रघुवंशनन्दनौ परस्परालापगिरं वनान्तिके ।
कुशाङ्कुरास्तीर्णशुभासने ततो निदद्रतुस्सौरभवायुवीजितौ ॥९॥
प्रभातकाले प्रतिबुध्य कौशिको रघुप्रवीरौ शयनीयनिद्रितौ ।
उवाच वाक्यं मधुरं मुदान्वितो यथा पिता प्रीतिभरेण पुत्रकौ ॥१०
विभाकरो राघव पूर्वपर्वतं विभाति चास्य न दुःसहातपः ।
वनं विहङ्गैरतिसङ्कुलीकृतं विहाय शय्यां कुरु वन्दनं रवेः ॥११॥
तमःप्रकाण्डं किरणैर्हरन् प्रभुः सुवर्णपुञ्जैरिव ते शिलीमुखैः ।
स कर्मसाक्षी जगतामिबोदये विजृम्भते पूर्वगिरौ विशांपतिः ॥१२॥
मुदान्वितोऽहं रघुनन्दनाधुना यतस्त्वमत्रैव निशाचरीमरिम् ।
सहस्रमत्तेभबलामबालिकां बलेन बालोप्यकृपा हि निर्गताम् ॥१३॥
समीरणोऽसौ रणकर्मदूषितं वनप्रसूनातिसुगन्धपूरितः ।
प्रभातकाले तव दिव्यविग्रहं श्रमेण हीनं कुरुते ससंभ्रमः ॥१४॥
पलाशनीपीडितपादपावलिः प्रसूनसङ्घं विकिरत्यनामयम् ।
सुकेतुजानाशकरस्य ते विभोर्विभाति संमानकृतौ कृतत्वरा ॥१५॥
अहं बहुप्रीतिसमन्वितोऽधुना ददामि तुभ्यं सकलास्त्रसंहतिम् ।
यया सुरा राक्षसयक्षकिंनरा भवन्ति शक्ता न हि योद्धुमाहवे ॥१६
गिरं गिरां नाथ इवेति संगिरन् समाप्य तूर्णं तरणेश्च वन्दनम् ।
स्थिताय सौमित्रियुताय कौशिकस्तदैव रामाय ददौ शरावलिम् ॥१
ददौ स चक्रस्य चतुष्टयं ततो महाबलं विष्णुचतुर्भुजोपमम् ।
भवन्ति भद्राणि सदेति तेऽनघ प्रपूरितो हर्षभरेण संवदन् ॥१८॥

अनन्तरं चायुधमैन्द्रमुज्ज्वलं ददावथ ब्रह्मशिरो महाद्युति ।
विरिञ्चिवज्रादिमहायुधव्रजं शुभाय रामस्य सलक्ष्मणस्य च ॥१९॥

सुखानि रामस्य भृशं विकासतो मुनेर्मुखाब्जात्प्रसृता सुधामयी ।
सरस्वती स्वस्तिमती यदाभवद्धृप्रसन्ना रघुनन्दनप्रभौ ॥२०॥

इतीरयित्वा वचनं महामुनिर्जपन्यदा शुद्धमना व्यतिष्ठत ।
तदायुधानां निचयस्तयोः पुरस्समेत्य चैवं गिरमाददे शुभाम् ॥२१॥

वयं प्रभो पुण्यकृतोऽधुना ननु प्रमोदमाना न लभामहे रुजम् ।
विनीतभावेन निदेशकारकास्तवाद्य याच्ञां तनुमो यथाविधि ॥२२॥

निदेशहेतोस्तव राघव प्रभो नतात्मशीर्षा वयमागता भृशम् ।
स्वपौरुषं दर्शयितुं मनांसि नः कुतूहलं भूरि विगाहतेऽधुना ॥२३॥

जगाम शस्त्रोदितवाक्यसन्ततिः श्रुतेस्सकाशं नृपजस्य सा यदा ।
गुणाभिरामा विनयान्विता तदा प्रहृष्टवक्त्रः प्रतिवाक्यमाददे ॥२४॥

भवद्गुणैस्सत्यमहं मुदान्वितो न कामयेऽद्यैव भवत्प्रयोजनम् ।
तदर्थमस्त्राणि मनःस्थितानि मे कुरुध्वमादेशनिरीक्षणे मतिम् ॥२५॥

यदाब्रवीदात्रघुपुङ्गवोऽन्वदस्तदाखिलाः प्राञ्जलयः प्रतस्थिरे ।
शिरस्यपाङ्गं विनिवेश्य सत्वरं प्रणम्य भक्त्या च तिरोऽभवन्नरम् ॥२६

भृशाश्वपुत्रान् सकलान्महामुनिर्विशुद्धचित्तो रघुपुङ्गवाय सः ।
अथोपदिश्य प्रददौ दुरासदान् सदोत्तमेपूत्तमसङ्गमं विदुः ॥२७॥

सहस्ररश्मिप्रभयाभिपूरितास्सहस्रशो दाशरथेः पुरः स्थिताः ।
यदाभवंस्तान् शिरसः प्रकम्पनात् प्रपूज्य तन्निर्गमनं समादिशत ॥२८

यथेष्टमत्रेशगणं विदिश्य तं गिरा गिरां नाथ इवाग्रवर्तिनम् ।
मुनेः प्रियायावरजाय राघवो ह्युपादिदेशात्मचयं प्रहृष्टधीः ॥२९॥
पथि प्रविष्टौ रघुनन्दनौ वनं वनस्पतीनामयुतेन संयुतम् ।
मनुष्यकौतूहलवर्धकं दृशोस्सकाशमानीय तमूचतुर्मुनिम् ॥३०॥
वियच्चरत्रीरदचुम्बिपादपं दिगन्तराक्रान्तशकुन्तनिस्वनम् ।
मनोहरं शान्तमिदं वनं मुने मुदं मुहुर्वीक्ष्य न कोऽत्र विन्दते ॥३१॥
तपोबलान्निर्गतवैरशोभितं तपोधनावासवृताखिलापगम् ।
लताभिरामं ललितं मधुव्रतैर्वृतप्रसूनं मृगपक्षिपङ्कुलम् ॥३२॥
विशालसालादिनिवारितातपं तपोग्निनिर्दग्धमहाघपङ्कम् ।
सितहिमध्यस्थितलापसोत्तमं तमस्समूहोन्मथनेन विश्रुतम् ॥३३॥
पलाशसंयुक्तपलाशपादपं पलाशनैर्हिंसितपन्नगाटिकम् ।
रसालवृक्षैस्स्मितपुष्पशोभितैर्युतं च रुद्रैरिव भस्मभूषितैः ॥३४॥
सुवासितश्वेतपुमप्रसङ्गिना सुगन्धिना गन्धवहेन वीजितम् ।
हरित्सु शोभाततिदीप्तपर्वतं त्रिलोकमात्राभ्युषितं यथा तथा ॥३५॥
सलक्ष्मणैस्सारसपक्षिभिर्वृतं चकासदत्रेव रघूत्तमैर्बहु ।
मयूरगानैरनुकच्छपीरवैः सरस्वतीवासविशङ्कितास्पदम् ॥३६॥
चकोरचारुस्वननिद्रिताखिलं चकोरबन्धुद्युतिशान्तविभ्रमम् ।
नगेश्वराळङ्कृतदिक्चतुष्टयं नगेश्वरारेरिव शोभितं वनम् ॥३७॥
इदं वनं नौ मुनिपुङ्गवाधुना धुनाति विस्मापितचेतनौ तनौ ।
नराः किमेकदकूपरिपीडनोद्धता नवं नवं वीक्ष्य न पूर्ववीक्षितम् ॥३८॥

इति ब्रुवन्तं वनदर्शनोत्सुकं सलक्ष्मणं राघवमब्रवीन् मुनिः ।
वनस्य चारित्रमिहानय श्रुतेस्तवान्तिकं ते कुतुकान्तकं महत् ॥३९॥

पुराभवद्राम वसन्तसन्निभो रमापतिर्वामनमूर्तिरीश्वरः ।
बलिं बली बालकरूपमाश्रितश्चकार यो निर्जितमात्ममायया ॥४०॥

विरोचनात्मप्रभवो बली तदा शशास राज्यं च निलिम्पविद्विषाम् ।
अनेकरक्षोधिपमौलिभूषणैरमूल्यरत्नैर्वृतपादपङ्कजः ॥४१॥

अनीकिनीनामयुतेन वर्धितस्वपौरुषो राक्षसराजसत्तमः ।
बिभेति नासौ बलशत्रुरक्षिताद्बलात्प्रति स्माश्रमतङ्गजोत्तमात् ॥४२॥

इति स्वराज्यं रिपुभिर्दुरासदं विधाय जेतुं परराज्यमप्यसौ ।
चकार चेतोऽरिजयाय भीषणो निलिम्पराजस्य पुरा पुरीं ययौ ॥४३॥

नवाम्बुदश्यामशरीरको गजा निषादिहस्ताङ्कुशघातिना जवात् ।
ययुः स्रवन्तो मदनिर्भरं जलं वृथायुधाघातभयादिवाचलाः ॥४४॥

रथाङ्गसंचंक्रमणेन रेणवो नभःप्रदेशं दधुरस्यगोचरम् ।
वसुन्धरा किं हि बलेर्बलेन सा भयाद्नभोदेशमिवाश्रिता बभौ ॥४५॥

तुरङ्गरंहःप्रतिरन्ध्रनाशया पदातिपादोच्छलितात्मविग्रहा ।
रसातलान्येवमतीव हिंसिता न शात्रवीमप्यसुरोऽवति श्रियम् ॥४६॥

क्षणेन रम्या नगरी दिवस्पतेर्भवेन हीना रमणीव सा बभौ ।
निलिम्पनारीहृदयानि निस्वनैर्भयङ्करैर्भूरि चकम्पिरे भयात् ॥४७॥

कूपीटयोनिः किल वायुना समं जितोऽभवद्दासमसैन्यताडनात् ।
शशाक तान्नाशयितुं सुदह्यतोऽप्यसौ न नाम्ना ज्वलनेन मानितः ॥४८

पुरन्दरो नात्र रणाङ्गणेऽप्यसौ जयश्रियासीत् परिरब्धविग्रहः ।
चलस्वभावा चलितामवत्तदा सुरेन्द्रलक्ष्मीर्बलिनं बलिं ययौ ॥४९॥

पराजिता राक्षसचक्रवर्तिना पराभवोत्तप्तशरीरकास्सुराः ।
रुरोद पश्चात्सुरसुन्दरीगणो न मृत्युतः किन्त्वभिषङ्गपीडया ॥५०॥

स्वरूपशोभाततिसंभृतामरास्सुराङ्गना दैत्यभयाच्चकम्पिरे ।
तदेव रूपं वरयोषितां सदा सखापि शत्रुर्भवतीह मानहा ॥५१॥

सुरेशरिक्ता नगरी बभौ यथा निशीथिनी शीतमयूखवर्जिता ।
वनान्तभूमिर्मृगराड्विवर्जिता दिनप्रभा भास्करतापवर्जिता ॥५२॥

क्व तत्र वाचस्पतिवक्त्रनिर्गता सरस्वती निर्जितपावकप्रभा ।
क्व चाधुना देववैरैरधिष्ठिता महारुचिद्योतितदेवनासभा ॥५३॥

ततस्सुरा गोत्रभिदा समं प्रभुं विपद्गणध्वंसिनमादिपूरुषम् ।
यदारिभिस्सन्ति विपीडिताश्च ते तदैव तेषां शरणं सुरान्तकः ॥५४॥

इहाश्रमे राम रमापतिं तपस्तपन्तमागत्य सुरोत्तमादयः ।
स्तुतिप्रसङ्गेन निमीलितेक्षणं क्षणेन संतुष्टुवुस्तमपौरुषम् ॥५५॥

रमाधवोऽप्यत्र तपस्तनोत्यसौ त्रिलोकसृष्टिस्थितिनाशकारणम् ।
कुतश्च शङ्कां विकिरन्तमीदृशीं विभातमच्छस्फटिकाभभास्करम् ॥५६॥

स्तुतस्ततो विष्णुरवादि जिष्णुना जितेन देवो बलिवाहिनीबलात् ।
परस्पराळापविधौ समर्पितामदर्शकेनोद्यमपद्मपाणिना ॥५७॥

अधःकृतात्मप्रवराङ्गसङ्गिना विशेषशोकानलतप्तचेतसा ।
नमन्निलिम्पप्रवराङ्गभूषणप्रभोपलश्रेणिविचर्चिताङ्घ्रिणा ॥५८॥

समस्तवित्त्वं खलु तेऽखिलं प्रभो प्रकाशमस्तीत्यनृतं न सर्वथा ।
समस्तवासस्य किमप्यगोचरं चराचरेष्वस्ति न देव वस्तुषु ॥५९॥

बलेर्महायज्ञ इहाविलम्बितं समाप्तिमाप्नोति यदा तदा वयम् ।
विपक्षतन्त्रास्तु भवाम सर्वदा मृता भविष्याम सुधाशना अपि ॥६०॥

निशाचरस्सोऽपि सुरारिभूपतिर्बलिस्तव प्रीतिकरेषु पुङ्गवः ।
यमान्तिकं नेतुमसौ न शक्यते दुरासदा देव सदा हि तादृशाः ॥६१॥

तदेव देवेश करोमि याचनां विमोहयन् दैत्यममुं स्वमायया ।
प्रयच्छ नो दुःखमहार्णवेऽचिरात् निमज्जतां दिव्यकरावलम्बनम् ॥६२॥

भवान विजेतुं बलिमुग्रविक्रमं जनार्दनो वामनरूपतां व्रजेत् ।
तनोतु कल्याणशतेन चावृतं त्रिविष्टपं मङ्गलकीर्तनो भवान् ॥६३॥

तथेति चाश्वास्य सुरान् स माधवो धवं दितेः प्राप महौ तपस्स्वकम् ।
परोपकाराय कृतत्वरा नरा गतादरास्स्वार्थकृतौ भवन्ति हि ॥६४॥

सहस्रवर्षान्ततपःकृतौ रतं वधूसहायं सहसैत्य काश्यपम् ।
निमीलिताक्षं समुवाच केशवो द्विजावलिद्योतितवक्त्रपङ्कजः ॥६५॥

मुनेऽमुना ते तपसास्मि नन्दितो वरं प्रयच्छामि वृणीष्व काङ्क्षितम् ।
उदीरितस्सर्वविदेति काश्यपस्तपोधनाग्रेसरमूचिवांस्ततः ॥६६॥

मम प्रियागर्भसुधाम्बुधौ शुभे कुमारचन्द्रो भव मन्यविग्रह ।
इमं वरं काश्यपयाचितं वरं प्रभुः प्रदायाथ तिरोबभूव च ॥६७॥

वृषानुगश्चक्रधरोऽथ वामनो मनस्स्वकं दानवनाशने दधौ ।
सितातपत्रेण निवारितातपो ययौ क्रतुं राक्षसचक्रवर्तिनः ॥६८॥

त्रिपादविस्तीर्णभुवं स वामनो बलिं ययाचे जगदेकवल्लभः ।
विचिन्तयंस्तां सुलभेत्यदादसौ प्रभुं कथं वेत्ति नृरूपिणं जनः ॥६९॥
पदं स्वमेकं निदधे स वामनो नभोन्तराले भुवि चापरं तथा ।
तृतीयपादं दनुजंमवेच्छया तदुत्तमाङ्गे च तिरोदधे ततः ॥७०॥
पुनश्शचीशो विगतामराज्यको दयालुनाकारि निलिम्पशासिता ।
मुकुन्दकारुण्यरसाभिषेचनात् न सन्ति कुत्रापि नराः पराजिताः॥७१
श्रमापनोदार्थमिहाधुना चिरं शुभाश्रमं चाधिवसामि राघव ।
चिरन्तनेनाध्युषितं पुरा त्वया दशावतारेषु च कुब्जरूपिणा ॥७२॥
इहैव मारीचमुखा हि दुर्जना विमर्दितास्तव्या पलरक्तदर्पिणः ।
यथा हरेराननविस्मनिस्वनान्मदोत्कटा काननवारणा वने ॥७३॥
प्रमोदमानः कथयेति राघवः शरच्छशाङ्काभिनवाननद्युतिः ।
दिवापि चन्द्रोदयशङ्कितान् मुनीन् समाप कुर्वन्निलयं तपोनिधेः॥७४॥
सुसत्कृतस्तत्र सपर्यया विभुः समाचचक्षेऽथ गिरां विचक्षणः ।
कर्तुं मुने कर्तुमना मखाश्रमे यतो विलम्बः खलु कार्यघातुकः ॥७५॥
दयायुतो नौ क्रतुरक्षणे कथं भवाव रक्षःप्रतिपक्षनाशने ।
इति प्रभो वक्तुमरं नियोजय स्वशेमुषीं धीरधुरंधरोत्तम ॥७६॥
भवाव चावां सवनावने रतौ भवान् भवत्वद्य जितेन्द्रियव्रतः ।
निगद्य वाक्यं मुनिमानसामृतं विरेमतुर्दाशरथीति साञ्जली ॥७७॥
नितान्तहृष्टस्स तु पङ्क्तिदर्पणः सलक्ष्मणं धीरधुरंधरं द्रुतम् ।
दिनानि सप्त क्रतुमत्र रक्षतं सुदीर्घ दीक्षां धृतवानृषीश्वरः ॥७८॥

कर्तुं धनुर्भूषितपाणिपल्लवे नृपात्मजे रक्षति हव्यवाहनः ।
ज्वलन् चकाशे द्युतिदीप्तदिक्तटः सुराश्च सेन्द्रा जगृहुः स्वयं हविः ॥
तपोधनाग्रेसरयज्ञरक्षणे स्थितं च धैर्येण विमुद्रिताननम् ।
कुमारकण्ठीरवयुग्मकं तदा बभौ गुहारक्षणतत्परं यथा ॥ ८० ॥
तपोधनाग्रेसरवक्त्रपङ्कजाद् विनिर्गता वेदसरस्वतीसुधा ।
सुखप्रदाकर्णयतां तदा नृणां विचित्रगत्या सुरलोकमभ्यगात् ॥८१॥
दिने समाप्ते सति सप्तमेऽसुराः सुबाहुमारीचमुखाः प्रपेदिरे ।
सरक्तवर्षास्त्रपलाश्च गर्विताः सहस्रहुङ्काररवार्दिताखिलाः ॥८२॥
सहस्रकण्ठीरवसन्निभं रवं तदा वितन्वन्नमरद्विषां गणः ।
तमोगुणेनावृतबुद्धिराययौ कर्तुं न बुद्धा रघुवर्यरक्षितम् ॥८३॥
यथाक्रमं त समुपाययुस्ततः कृतावकर्षन्पलरक्तविप्रुषः ।
खगाहतास्तत्क्षणमम्बरं गता खगा इवैवाशुगवेगवीजिताः ॥ ८४ ॥
धनुर्गृहीत्वा महता स रंहसा मुमोच वीरः स शिलीमुखोत्तमान् ।
हतान् समीक्ष्याथ स दुष्टचारिणो बभूव तुष्टो रघुवंशनन्दनः ॥८५॥
स मानवास्त्रेण शुभेन तत्क्षणे सुरारिनाथं तु चकार पीडितम् ।
महार्णवे प्राणयुतो निवेशितः स हेतुना केनचिदाशराधमः ॥८६॥
कपीटयोनेरतितीव्रगामिना शरेण नीतः समवर्तिमन्दिरम् ।
सुबाहुनामा तदनन्तरं रणे चकार शेषानपि राघवो हतान् ॥८७॥
भुजान्तलक्ष्मीपरिशोभितं मनाक् स्वशोभया दीप्तमतीव शुद्धया ।
रणे जयश्री रघुवंशनन्दनं दनूद्भवारिं परिरभ्य राजिता ॥८८॥

अथ कुशिकतनूभवः स्वयज्ञं
व्यततुत पालितमात्मजेन राज्ञः ।
द्विगुणितनिजविद्युतिं विरामं
भुवि विपदां प्रशशंस मानसे स्वे ॥८९॥

कन्योद्वाहविधौ कृतोद्यममथो भूपं विदेहाधिपं
श्रुत्वा कार्मुकमैशमेवं मुनिवरः श्रीकण्ठमुद्राङ्कितम्
तत्रोद्वृत्य रघूद्वहाय गुणिने सर्वाङ्गशोभान्वितां
सीतां दर्शयितुं धनुश्च सुमहच्चक्रे मनोनिश्चयम् ॥९०॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

॥ इति श्रीसीतास्वयंवरे महाकाव्ये ऽप्यङ्के ॥

॥ सवनावनं नाम ॥

॥ तृतीयस्सर्गः ॥

---

॥ चतुर्थस्सर्गः ॥

॥ कुशनाभचरितम् ॥

समरभवपरिश्रमेण पूर्णः
स मरणकारणमाशरेश्वराणाम् ।
कुसुमशयनतलेऽस्वपत्सुखेन
श्रमहरणे पटुरेव रम्यनिद्रा ॥ १ ॥

गगनगतिरतीव्ररश्मिराशु
निजवदनादपि सुन्दरं समीक्ष्य ।
रघुकुलतिलकस्य दिव्यवक्त्रं
जलदचयेऽथ तिरोदधे सलज्जः ॥ ७ ॥

त्रिभुवनमिव विद्युदामभाभिः
सितपटसंवृतमेव भूरि तन्वन् ।
कुमुदकुसुमसंहति सहासां
सितकिरणः स्म विजृम्भते सतारः ॥ ८ ॥

उदयगिरिगते सुधांशुबिम्बे
वियति खगाश्च खगोदयभ्रमेण ।
कलकलनिनदैः प्रतिध्वनन्तः
सकलदिशोऽप्यवदयन्त धूतपक्षाः ॥ ९ ॥

द्विजपतिरथ पुष्करे विशाले
निशि विचरन् सह तारकासमूहैः ।
चलति जलनिधौ किरन् न बिन्दून्
रजतमयः खलु राजतीव कोलः ॥ १० ॥

वनभुवि च सरोजले शशाङ्कः
प्रतिफलितात्ममनोज्ञमूर्तिरेकः ।
पतिरिव जगतामनेकधेव
स हि भगवान् विविधावतारधारी ॥ ११ ॥

गगनगतिरतीव्ररश्मिराशु
निजवदनादपि सुन्दरं समीक्ष्य ।
रघुकुलतिलकस्य दिव्यवक्त्रं
जलदचयेऽथ तिरोदधे सलज्जः ॥ ७ ॥

त्रिभुवनमिव विद्युदाममाभिः
सितपटसंवृतमेव भूरि तन्वन् ।
कुमुदकुसुमसंहतिं सहासां
सितकिरणः स्म विजृम्भते सतारः ॥ ८ ॥

उदयगिरिगते सुधांशुबिम्बे
वियति खगाश्च खगोदयभ्रमेण ।
कलकलनिनदैः प्रतिध्वनन्तः
सकलदिशोऽप्यवदयन्त धूतपक्षाः ॥ ९ ॥

द्विजपतिरथ पुष्करे विशाले
निशि विचरन् सह तारकासमूहैः ।
चलति जलनिधौ किरन् स बिन्दून्
रजतमयः खलु राजतीव कोलः ॥ १० ॥

वनभुवि च सरोजले शशाङ्कः
प्रतिफलितात्ममनोज्ञमूर्तिरेकः ।
पतिरिव जगतामनेकधेत्र
स हि भगवान् विविधावतारधारी ॥ ११ ॥

गगनगतिरतीव्ररश्मिराशु
निजवदनादपि सुन्दरं समीक्ष्य ।
रघुकुलतिलकस्य दिव्यवक्त्रं
जलदचयेऽथ तिरोदधे सलज्जः ॥ ७ ॥

त्रिभुवनमिव विद्युदाममाभिः
सितपटसंवृतमेव भूरि तन्वन् ।
कुमुदकुसुमसंहतिं सहासां
सितकिरणः स्म विजृम्भते सतारः ॥ ८ ॥

उदयगिरिगते सुधांशुबिम्बे
वियति खगाश्च खगोदयभ्रमेण ।
कलकलनिनदैः प्रतिध्वनन्तः
सकलदिशोऽप्यदयन्त धूतपक्षाः ॥ ९ ॥

द्विजपतिरथ पुष्करे विशाले
निशि विचरन् सह तारकासमूहैः ।
चलति जलनिधौ किरन् स बिन्दून्
रजतमयः खलु राजतीव कोलः ॥ १० ॥

वनभुवि च सरोजले शशाङ्कः
प्रतिफलितात्मनोज्ञमूर्तिरेकः ।
पतिरिव जगतामनेकधेत्र
स हि भगवान् विविधावतारधारी ॥ ११ ॥

इति विधुरखिलेऽपि जीवराशौ
नवरसवर्षमतीव पातयन् सः ।
परिणतिसमये निशाप्रभाया
वरुणदिगङ्गनया समं स रेमे ॥ १२ ॥

निशितकिरणविक्रमेण पूर्वं
परिचितवृत्तिरसौ भयाद्यया वा ।
उदयमसहमान इन्दुरस्य
चरममहीधरशृङ्गमध्युवास ॥ १३ ॥

विषमहरिरयोदयाद्रिमुच्चै-
र्हर इव राजतशैलमारुरोह ।
नमुचिरिपुदिगङ्गनाङ्गसङ्गो
धरणिभृदङ्गजया सहेश्वरो वा ॥ १४ ॥

मखनिधिनिलयाद्बहिर्गतोऽसौ
शुचिशकलोपमविग्रहो ग्रहेशः ।
अमुदित इव भूरिवारिपाना-
दपि वनमार्गणवीरुत्म भाति भूयः ॥ १५ ॥

मुनिजनवनमध्यवासरम्या
भुवनविलोचनदर्शनाद्भमन्त्यः ।
कमलकुसुमराजयस्तदास्मै
भ्रमररवैः प्रशशंसुरात्महर्षम् ॥ १६ ॥

मधु मधुकरवृन्दमम्बुजाना-
मममृतरसं हि यथेप्सितं च पीत्वा ।
मधुरसरहितं विहाय पुष्पं
मधुरमधु प्रविवेश पुष्पमन्यत् ॥ १७ ॥

नमति च नमतो मणिं समीक्ष्य
मुनिवरशिष्यगणो विहाय निद्राम् ।
अवितटममलाम्बुभिस्तटिन्या
दिनविधिकर्मरतो बभूव चोत्कः ॥ १८ ॥

मुनिनिकटमवाप्ततटेऽप धुन्या
मसितसिताळिकान्तयो निषद्य ।
करशरनपुटान् शरैः प्रपूर्य
प्रददुरथार्घ्यमशीतभानुमासे ॥ १९ ॥

दशरथतनयौ विहाय शय्यां
निजकुलहेतुमथाम्बरे निशाम्य ।
विकसितनयनाथनाम्बुजातौ
यतहृदयावभिनेमतुश्च भक्त्या ॥ २० ॥

अपि मुनिजनमामिनीसमाजः
सुरभिसुमान्यवचित्य भूरुहेभ्यः ।
हसितवदनशोभयाभियुक्तो
निजसदनाभिमुखो बभूव शीघ्रम् ॥ २१ ॥

वननवसुमभूषितालकान्ता
मुनिवरपादरजःपरिष्कृतास्ताः ।
अपि कनकविभूषणैर्विहीना
गुणगणपूर्णतयैव भूरि रेजुः ॥ २२ ॥

ललितमृदुमृगव्रजं व्रजन्तो
मुनिदयितामृदुपाणिलालितं च ।
अपि वनवनितावमानभारा-
चलनयनास नतोत्तमाङ्गभागा ॥२३॥

तरुणतरणिवन्दनं समाप्य
द्रुतमथतापससत्तमान्तिकस्थाः ।
सनृपतितनयाश्च तस्थुरार्यं
मुनिमपितो गगने ग्रहा यथेनम् ॥२४॥

प्रथममबहुपीतपाहदुग्धं
निजतनुजं निजजिह्वया लिहानाम् ।
मुनिवररमणी दुदोह धेनुं
स्वलदनलाय पयःप्रदानहेतोः ॥२५॥

तरुणतृणगवेषणेन जग्मु-
र्लघुविरहो बहुदीर्घ आत्मवत्सात् ।
इति मनसि विभाव्य तत्र दृष्ट्वा
मुहुरपि ता मुनिधेनवस्सवेगाः ॥२६॥

किमिह गुरु मयाद्य कार्यमस्ति
कथय मुने तदहं मुदा करिष्ये ।
इति वचनमुदीरितं निशम्य
रघुतिलकेन तमूचुरेवमार्याः ॥२७॥

कमलमुख मखो निरन्तराय-
स्तव बलरक्षित एव साधितो नः ।
वयमिह न कदापि यज्ञमूर्तौ
त्वयि सुमुखे विफला भवाम कार्ये ॥२८॥

जनकनृपतिपत्तने कुमार
द्युमणिकुलोत्तम धर्मकर्मसंवित्
भवति हि सवनं सहास्मदीयै-
स्त्वमपि न हृतिपुरस्सरैस्त्वरस्व ॥२९॥

क्रतुवरनिलये लयेन हीनं
महति महश्च विभो शरासनं ते ।
गुणविरहितमक्षिगोचरं त्वं
गुणगणभूषण सत्वरं करोषि ॥३०॥

कनकगिरिवरामचारुचापं
गिरितनयाप्रियभर्तृशक्तिपूर्णम् ।
अभवदपि न देवयक्षसङ्घै-
र्नमयितुमप्रतिमौजसाभियुक्तैः ॥३१॥

वरनृपतनयाश्च वीरमुख्या
जयरमयातिपरिष्कृता रणेषु ।
अपि शतगजभारमस्य चाप
पदमपि चालयितुं न शेकुरेकम् ॥३२॥

प्रथममतिसुखेन साध्यमेव
प्रथितगुणास्तनुमा महीपतीनाम् ।
निजमनसि विचिन्त्य तन्निशाम्य
नतशिरसः खलु लज्जया निजग्मुः ॥३३॥

जयति जयरमाङ्गनाङ्गसङ्गि
स्मरहरचापमजिह्मगैरयुक्तम् ।
तव बलमतुलं वयं विदित्वा
हृदि जयिनं रघुवीर भावयामः ॥३४॥

महति निवसने महद्धनुस्तद्
द्युविरहणस्य विदेहदेहभाजाम् ।
निजनयनपथे निवेश्य भूयो
नमयसि नूनमरं त्वमेव नान्यः ॥३५॥

सुरवरकरदिव्यवज्रघाताद्
दुधुवुरिलाधरसर्वविक्रमाश्च ।
तदिव तव पराक्रमः क्रमेणा-
हणकुलजेष्वमनं हिनस्ति शैवम् ॥३६॥

इति निधिभिरवाचि रामचन्द्रः
शुभतपसां जितरोषपावकैस्तैः ।
अथ विनयमनोहरो हराङ्कं
जनकगृहे [illegible] निरीक्षितुं चकाङ्क्ष ॥३७॥

त्वरितमथ महामुनिस्सशिष्यः
सरघुवरस्स्वनिकेतनस्थितेभ्यः ।
मृगविहगनगाशुगागमेभ्यः
सकलसुखं प्रददौ ययौ विदेहान् ॥३८॥

सितकिरणमुखौ जितेन्द्रियौ तौ
रघुकुलजौ मुनिना समं लसन्तौ ।
द्युमणिकिरणजाततीव्रतापं
विपिनभुवं कठिनां च न स्म विदतः ॥३९॥

स भवतु भवतां समस्तभद्रं
मुनिरिति मङ्गलवाचमीरयित्वा ।
मनुजपतिपुरं पुरः प्रतस्थे
मुनिनिकरस्य तपोधनाग्रगण्यः ॥४०॥

स्वयमतिकरुणाभिरर्थमाने
प्रथितगुणं स्वकुलोद्भवं विदित्वा ।
तदनु नृपसुताश्च निग्रहीतुं
झटिति करान् घनमध्यमभ्युवास ॥४१॥

विविधगतिभिरंयमा विशाले
वियति चरंस्तपति स्म वन्यभूमिम् ।
मदनरिपुरिवाबभौ स साक्षा-
दपरदिशं प्रति धावति स्म पश्चात् ॥४२॥

धनपतिहरितं प्रति प्रयातः
सऋषिगणः कुशिकोद्भवश्च गत्वा ।
विपिनभुवि विदूरमस्तगोत्रं
दिवसपतौ च गते समाप शोणाम् ॥४३॥

अधितटमथ विश्रमार्थमेते
द्युपसरितस्सुरनिम्नगाभिधायाः ।
निवसतिमपि चक्रुरूर्मिहस्तैः
स्वरवरयेण ददौ च सा सपर्याम् ॥४४॥

परिणतसितदाडिमीफलाभा-
नुदककणान् परितः प्रसारयन्तीम् ।
सितकिरणसुधामिवातिशीता-
मधिगतवन्त इमे तनश्च शोणाम् ॥४५॥

पथि गमनजतापतप्तदेहाः
श्रमजलबिन्दुभिषिक्तसर्वगात्राः ।
विमलमथ निजाङ्कमेव कर्तुं
शुभचरिता निममज्जुरापगाप्सु ॥४६॥

चरमदिगबलाशुभास्यबिम्बं
रसभरितं रभसेन चुम्बिताय ।
प्रददुरनघवाय पूरयित्वा
स्वकरपुटान् भुवनेन तेऽर्घ्यमार्याः ॥४७॥

तदनु हुतहुताशनाश्च विप्रा-
स्तटमाधिशय्य सुशिष्यमङ्गसेव्याः ।
हरमिव रजताचले गणास्ते
मुनिमभितो विपिने निषेदुरेनम् ॥४८॥

दशरथतनयावपि प्रणम्य
ग्रहपतिमुत्तममागतौ मुनीन्द्रम् ।
गुरुकविसमविग्रहौ विभातो
मुनिवररूपधरौ यतेन्द्रियाश्चौ ॥४९॥

भगवति दिनपे विभाकरेऽस्तं
गतवति नीलपटावृतेव नारी ।
झटिति च रजनी समाजगाम
ह्यमदिह वृद्धिमुपैति सद्विनाशे ॥५०॥

मयदमिभशरीरनीलमिन्दुः
स्खलयितुमेव च तत्तमःप्रकाण्डम् ।
नभसि जलधिमग्नकायमध्यो
ह्यपि ददृशे खलनाशका हि सन्तः ॥५१॥

वनभुवि हरिदश्ववंशजातं
निजमृगचञ्चललोचनेन दृष्ट्वा ।
भयसहित इवाशु खेऽपि गच्छ-
न्नथ धवलास्यरुचिश्च जायतेस्म ॥५२॥

विभवमभवकारणं तदीये
वनविषये विषकण्ठगीतनाम्ना ।
अतिकुतुकयुतस्समस्तवित्सः
विदितमपि स्वनुयुक्तवान् मुनीन्द्रम् ॥५३॥

मम मुररिपुरूपिणाद्य वक्तुं
सममिति पूर्वसुकर्मणः फलं हि ।
असकृदमलमानसे विचिन्त्य
विकसितवक्त्ररुचिस्तमाबभाषे ॥५४॥

शृणु मनुजमणे फणीन्द्रशायिन्
तव कथयामि कथां सुधार्द्रवाणीम् ।
इह कुश इति कश्चिदुग्रतेजा
न्यवसदधर्ममहेमकेसरीशः ॥५५॥

अभवदखिलशीलसंपदेका
गिरितनयेव पिनाकिनः प्रियार्या ।
सुगुण गुणगणैर्विभूषितैव
कुशमुनिशासितुरागता विदर्भात् ॥५६॥

जनयति कुशतापसस्स्म तस्यां
वरतनयान् चतुरश्च शौर्यपूर्णान्।
दशरथनृपनिर्यथा सुतं त्वां
सह भरतादिभिरात्मभामिनीषु ॥५७॥

तदनु दनुजनाशक स्वपुत्रान्
निजपुररक्षणकर्मणि प्रयुज्य।
वशमतिमरितांश्च धर्ममार्गान्
स तु गतवान् वनमेव तप्तुकामः ॥५८॥

प्रथमतनुभवः कुशाम्बनामा
पुरमकरोत्त्रिपुराभमात्मनाम्ना।
तरुण तदनुजो महोदयं च
विरचितवान् जनपालको बभूव ॥५९॥

अपि च धरवनं हि धर्मपूर्वं
तदवरजश्च ततस्ततान रम्यम्।
वसुरपि वसुधामिमां नरेन्द्र
वसुभरितां नगरीं गिरिव्रजाख्याम् ॥६०॥

विषमगिरिवरावृता समन्तात्
सुमगधजाभिधयावृता तटिन्या।
विषमशरबलाबलेव सा पू-
र्भवति किल स्फटिकस्तनाभियुक्ता ॥६१॥

भुवि भुवनमनोज्ञ मञ्जुलाया-
मिह दयितेव विभाति सिन्धुपत्नी।
इयमपि वसुधाभृतामनन्या
वसुपतिरात्मपतिर्हि कामिनीनाम् ॥६१॥

मुदमति च तनुष्व नेत्रयोस्ते
कुशनृपतेः कुशनाभसूनुनैतत्।
विरचितमिह पत्तनं मनोज्ञं
विगतकलङ्कमनीति चात्तनीति ॥६३॥

अजनयदवनीपतिर्घृताच्यां
शतमतिसुन्दरमात्मनः सुतानाम्।
गिरिरिव सरितां शतं स्वदेहात्
कुटिलगतं ननु चन्द्रमस्सवर्णम् ॥६४॥

अथ नृपतिकुमारिकाश्च काले
बलमबला अपि लेभिरे मरेण।
वसुरिव ललिता लता वनान्ते
मधुसमये वसुधाधरेषु जाताः ॥६५॥

हृदयहरविभूषणाभिदीप्ता
मदनजिताः प्रमदा मदालसाङ्गाः।
ययुरुपवनमेकदा तरुण्य-
स्तरुविभवं च समीक्ष्य मोदमानाः ॥६६॥

नवरसभरिताथ वामनेत्रा
  वरशुकमात्मभुजे निवेशयन्ती ।
धवलनरवरांशुकावृताङ्गी
  वरवरटेव जगाम तासु काचित् ॥६७॥

विकसितसितदन्तकान्तवक्त्रा
  सुरभिमुखाम्बुमहूतषट्पदाऴिः ।
मुहुचिहचिरमण्डनैरनेकैः
  परिवृतवक्त्रतुषाररश्मिरन्या ॥६८॥

चरणयुगरणद्विभूषणान्या
  रथचरणामनितम्बबिम्बवाही ।
वनभुवनिवहेषु दत्तदृष्टि-
  र्यवनवपल्लवपाण्डुगण्डकान्तिः ॥६९॥

रसभरितरसालचर्मवर्णा
  मृदुमधुराधरकान्तिमुद्वहन्ती ।
कलकलनिनदैरधःकृतालि-
  र्मधुररवा च जगाम बालिकान्या ॥७०॥

तनुकटिविषयाप्यमुक्तकामा
  मदकलकुम्भसमानमुस्तनीका ।
सितखगमिथुनं सिते तडागे
  नयनपुटेन पटुर्यथौ पिबन्ती ॥७१॥

गुरुहितपटं पटोः शुभाङ्ग्याः
वनपवनः खलु धूनुते स्म तत्र ।
अवयवधववैभवं तदीयं
शुभमवलोकयितुं मुदेव सूत्कः ॥७२॥

नखरकरशातप्रदीप्तवीणा-
निनदविनोदितमानसान्यबाला ।
निजगलभवनिस्वनैर्लपन्ती
पिकशितिकण्ठसमा ययौ सुकण्ठी ॥७३॥

उपवनमधिगम्य राजपुत्र्यः
पिकभुजगाशनहंससारसाद्यैः ।
युतमयुतमहीरुहैश्च रम्यं
समयमथ स्म सुखेन यापयन्ति ॥७४॥

सरिगमपधनिस्वरैः स्वराज्ञा
निजभगनीभिरनुलम्यमूर्तिः ।
सह वनभुवि गातुमुत्सुकान्या
मृगखगवृन्दमथातनोति मूकम् ॥७५॥

निवसतिमभिशय्य च वनत्या
अपरवधूर्दृषदामनोपरिस्था ।
असितजलदमध्यमध्यदीप्ता
तडिदिव भाति नभं स्म तत्र रामा ॥७६॥

यदनुसरमिमाशुगो विदित्वा
मधुमुगनन्तरमेकफन्यकायाः ।
कमलमिति विभाव्य मानसे स्वे
मरगमनेन मुखं स्पृशन्निवासीत् ॥७७॥

सखि ललितलता हि गोस्तनीया
स्तबकफलद्वितयेन नम्रयष्टिः ।
तव कुचकलशावनम्रदेहं
स्वनुकुरुते प्रमदेति काचिदूचे ॥७८॥

इति विविधविलासलास्यहास्यै
र्नृपतनयाशतमुत्तमं वने तत् ।
समयमनयदात्तयौवनं च
जितहृदयं हृदि मारपूजनस्यम् ॥७८॥

कुशतनुजकुमारिकास्समीरः
शतवनिता विपिने विलोक्य पश्चात् ।
तदुदितवररूपराशिमुग्धो
विषमशिलीमुखबाणताडितोऽभूत् ॥८०॥

स्मरकुसुमशरविद्धमानसो न
स च विजहाति वराङ्गनासमीपम् ।
नयनयुगलवीक्षितामिरामि-
र्मुहुरपि तृप्तिमवाप मारुतो न ॥८१॥

प्रवति पवने प्रपञ्चजन्ये
तरुषु न चेलुरथोच्चकैर्दलानि ।
अभवदपि न पङ्कसङ्कजातः
सरसि जलेषु मनो भ्रमो मनोज्ञः ॥८२॥

वहति न च तदा स्म विस्मृतात्मा
कुसुमसुरभिं खलु गन्धवाहनामा ।
अधरकिसलयात्सुगन्धमाप्तुं
निजरसनोपरि वोढुमुत्सुको वा ॥८३॥

नृपतिकुलललामपुत्र राम
प्रभुरथ वायुरहस्यविग्रहोऽपि ।
दशदशतफणीपतिर्बुभूषु-
र्वनभुवमाप मनुष्यरूपधारी ॥८४॥

तनुरहितशतावरीसवर्ण-
द्विजनिकरेण परिस्फुटास्यपद्मः ।
तिलकुसुमनिभनासिको नभस्वान्
नभसि शुपान्द्र इवाजगाम तत्र ॥८५॥

पतगरमणकण्ठवर्णशुभ्रः
प्रविपुलकान्तभुजान्तरप्रदेशः ।
श्रवणयुगनिविष्टकुण्डलाभ्यां
किरणशतैरिव दीप्तगण्डभागः ॥८६॥

तिलक नरकुलस्य पुष्पधन्व-
तिलकविराजितदिव्यफालदेशः ।
तिलकयुतवनं समागतस्म
मदनमदोद्धतपुष्पो यथान्वः ॥८७॥

अहिवरतनुतुल्यबाहुयुग्मः
कनकमहोर्मिकयाभिदीप्तपाणिः ।
रघुवर लघुनाम्बरेण वातो
वृतनिजकन्धर एव सुन्दराङ्गः ॥८८॥

मधुकरतनुनीलकेशपाशो
नलिनदलायतनीलनेत्रयुग्मः ।
विषमशर इवापरस्म साक्षात्
शतवनितानिकटं समागतास ॥८९॥

चिरमहमभिवीक्ष्य वल्पुरूपा
मनसिजपुष्पशिलीमुखार्दितात्मा ।
तदिह हि भवतां मतस्मभीपं
मम दयिता भवताद् यूयमद्य ॥९०॥

भवतु तव करः क्रिलास्मदीये
कुचकलशोपरि लास्यकृत्यमग्नः ।
इति वचनमुदीर्य सुन्दराङ्गचः
मयि वहताय रसं प्रसन्नायाः ॥९१॥

रतिपतिविशिखाग्निशोषितात्मा
मधुचरितापरपानकर्ममत्तः ।
मम तु मुदमिहातनोमि कन्या
मधुरवचः कथयन्नमद्य हर्षात् ॥९२॥

रहसि ह्लसितनीलमेघकेशाः
सह भवतीभिरनङ्गसंभोगान् ।
बहुकृतकसुतश्च भूरि भुक्त्वा
सुखमधिगम्य वसामि दीर्घकालम् ॥९३॥

मनुजरमणनन्दना हि यूयं
भवथ यशोऽपि यमस्य सुन्दराङ्ग्यः ।
यदि वशमधुना भवत्सु मस्तं
मम कुरुथाथ न मृत्युतो भयं वः ॥९४॥

इति वदनमुखाद्विनिर्गतां तां
गिरमनयां श्रवणातिथिं प्रणीय ।
प्रतिवचनमतीव धर्मपूर्णं
परमहृषा ददुरुग्रविग्रहाय्नम् ॥९५॥

कुशसुतनयामनांसि नैकं
पदमपि धर्मपथाद्विचेलुरद्धा ।
किमु जितजगतां मनांसि रम्ये
विषयसुखे निरमन्ति निन्दनार्हे ॥९६॥

अथ निजवदनैर्विहस्य किञ्चिन्
ज्वलनकणान्नयनैरिवोत्किरन्त्यः ।
किमु पवनसखस्य वायुवार्ता
नयरहितां च निशम्य दुःखितो वा ॥९७॥

अपि वरनृपतेस्सुता गुणाढ्याः
शुभवचनं खलु मन्यथ मर्मपूर्णम् ।
जगदुरनिलमस्तभीतिभावाः
क भवति भीतिरधर्मनाशकानाम् ॥९८॥

वयमिह पितुराज्ञया निबद्धा
कलिमयमस्य च नाथ चिन्तनीयः ।
अमरवर भवद्वचो न युक्तं
त्विति वयमैक्यविधेर्धृतेश्च वच्मः ॥९९॥

रमणमनिल यं पितास्मदीयो
विदिशति सोऽपि पतिर्न चान्यथा नः ।
भवतु स मनुजो महाधनो वा
धनरहितोऽपि च सुन्दराकृतिर्वा ॥१००॥

गुरुरपि च सुदैवतं विना नः
सकलकलङ्करिपुस्स एव वायो ।
रथचरण इवात्ममार्गसक्तो
वयमपि देव पितुर्निदेशसंस्था ॥१०१॥

पततु दिनकरः स्वमण्डलाच्च
त्यजतु सुराधिपतिस्स्वधर्ममार्गम् ।
नरपतिरपि सत्यमार्गवैरी
भवतु न तात भवाम धर्महीनाः ॥१०२॥

लपितमथ निशम्य मारुतस्तद्
क्षणमपि कोपपरात्मवान् बभूव ।
तदवयवसमस्तमेव काले
निमिषयुते स बभञ्ज दुष्टबुद्धिः ॥१०३॥

परिमलरहिता प्रसूनलेखा
कुसुमनवाङ्कुरहीनभूरुहालिः ।
विकृतनिजशरीरिकेव राज्ञः
वातलतयालिरराजताथ भूरि ॥१०४॥

क्वचिदतिरमणीयता गताभूत्
क्वचिदपि धावति संमदः स्म तासाम् ।
अपि धनवसुधेव ता रुरोद
नयनयुगस्य च गोचरं प्रणीय ॥१०५॥

उपवनमथ तद्विहाय राज्ञः
शतमगमत्पितुरन्तिकं सुतानाम् ।
स हि निखिलसुखप्रदानहेतुः
प्रियजनकः खलु शैशवेऽङ्गनानाम् ॥१०६॥

चरणयुगमनन्तरं तरुण्यः
पितुरमलं जगृहुश्च पेतुरुर्व्याम् ।
नयनसलिलसिक्तमेव चक्रु
र्भृशमपि रोदितुमारमन्त कन्याः ॥१०७॥

किमिदमिति वदन्तमावमाघे
मनुजपतिं च शतं सुकन्यकानाम् ।
निखिलमनिष्टदुष्कृतं च तस्मिन्
विरमति कोपपरो बभूव राजा ॥१०८॥

भुजगपतिरिवाथ शोकततः
श्वसिति नराधिपतिः स्म ता विलोक्य ।
विजितकरणवृन्द एव पश्चात्
तुरंगवरं च यथा ववन्ध कोपम् ॥१०९॥

अथ दुहितृगणं महीमहेन्द्रः
शुभवचनैरति सान्त्वयन् स क्रुध्नम् ।
उपदिशति ततः स्म शान्तिमासां
भवविमुखश्च समाधिमेव लेभे ॥११०॥

सचिववरशताभियुक्तगोष्ठी-
मपरदिने दिननाथतुल्यतेजाः ।
अपि मनसि शुचा विशञ्चकाशे
परमगिरीन्द्रनिकेतनो यथा सः ॥१११॥

चचार तदा राम महामुनीन्द्रस्तस्थौ त्रिवैश्वानरदग्धमूर्तिः ।
घोरे तपःकर्मणि दत्तबुद्धिर्मानुर्यथा वा च धनञ्जयोऽन्यः ॥११२॥

गन्धर्वकन्या कमनीयरूपा नाम्नेन्दुदेन्दूपमशीतलास्या ।
सेवापराभूत्परमं प्रमोदं लेभे च धर्माध्वनि सञ्चरन्ती ॥११३॥

वराङ्गना सा मुनिनानुयुक्ता वरं वृणीष्वेति मुदा तदार्या ।
स्वशीर्षसंबद्धनिजाञ्जलिश्च वरां गिरं नूनमवोचदित्थम् ॥११४॥

मुने पदे तेऽद्य करोम्यनेका नतीर्न तीर्थेष्वपि पुण्यमित्थम् ।
अनन्यचेतास्तव सेवयाहं महोज्ज्वलं धाम दधामि देव ॥११५॥

इति ब्रुवाणा तनयं ययाचे बलिष्ठमब्जासनतेजसं च ।
तथेति तस्यै तनयं महर्षिः प्रसन्नमूर्तिः प्रददौ तपःस्थः ॥११६॥

कुशात्मजन्मा विधितेजसे सुता ददौ महीपाय स काम्पिलीपुरः ।
तदा विकुब्जाः किल सोमदासुतात्कृताः स्वरूपाणि पुनश्च लेभिरे ॥

इक्ष्वाकुवंशतिलकाय तदा महर्षी
रामाय गाधिचरितं श्रुतिहर्षहेतुम् ।
सर्वं जगाद जगतीपतये स हृष्टो
रामोऽपि नैव विविदे समयं निशीथे ॥११८॥

ज्ञात्वा तदातिसमयं निशि काननान्ते
दर्भाङ्कुरैर्युतमनिन्दितभूमिभागम् ।
श्रीराघवोऽपि विनतः प्रियलक्ष्मणेन
सार्धं महर्षिवचनात्सहसाधिशिश्ये ॥११९॥

नीत्वा रात्रिमथानुजेन सहितः श्रीरामचन्द्रः सुखं
विश्वामित्रमहर्षिणा सममयात् शृण्वन् कथा मञ्जुलाः ।
सान्द्रानन्दमविन्दतापि महतीं त्यक्त्वा च शोणां नदीं
गङ्गामाप तरङ्गिणीं शुभमलां काले प्रभातेऽमलाम् ॥१२०॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥
॥ इति श्रीसीतास्वयंवरे महाकाव्ये श्र्यङ्के कुशनाभचरितं ॥
॥ नाम चतुर्थः सर्गः ॥

---

॥ पञ्चमस्सर्गः ॥

॥ जाह्नवीवर्णनम् ॥

वङ्गाभिधे जनपदे जननीं जनानां
रत्नाकरेण रमणेन च सङ्गताङ्गीम् ।
गङ्गानदीं त्रिजगतीतलपुण्यतीर्थां
दृष्ट्वा जगाद रघुवंशवरं महर्षिः ॥१॥

चन्द्रार्धचूडमहिषीभगिनीं चिरत्नीं
श्रीराम पश्य सहजेन सहात्र मञ्याम् ।
उक्त्वेति वाक्यममलाम्बुजलोचनं तं
स्नात्वा मुनिर्वरधुनीं नुतिभिर्नुनाव ॥२॥

गङ्गे तरङ्गतरले महनीयमूर्ते
मातस्तवाङ्घ्रिकमलं शतशः प्रणौमि ।
मन्ये शिवाधवजटावनवासपूतां
पुण्ये ममाप्यखिलसौख्यचयप्रदां त्वाम् ॥३॥

मातस्तवातिविमले सलिले सलीलं
मज्जन्ति ये हरिपरा मनुजास्सदेहाः ।
ते विष्णुदिव्यचरणाब्जमरं लभन्ते
यत्त्वं तदङ्घ्रिनिलये लयवर्जितासि ॥४॥

धन्या नरास्तव तटे तपसि स्थिता ये
वन्ये नगेन्द्रतनये च हरिं हरं वा ।
नान्यं विचिन्त्य हृदये विमले तु तेऽरं
मन्ये मनन्ति सुकृतं धुतकल्मषौघाः ॥५॥

गौरीसपत्नि गिरिजे गुरुनाथनाथे
काले कलौ कलिकलङ्कधुते हितङ्गे ।
मातेव मामवसि देवि दयापयोधे
नान्यं विनेह कलये मनसि त्वयाम्ब ॥६॥

जन्मान्तराकलितपापकृतीः करोषि
ज्वालाभिरात्मतनुजाभिरिवाग्निदेवः ।
त्वचन्द्रशीतजलबिन्दुभिरेव रम्यै-
र्भस्मावलीः किमु कृतीरिह जन्मजाताः ॥७॥

मातर्वसन्ततिलके तिलके नदीनां
दीनाञ्जनान् सततमात्मबलाद्विपापान् ।
पापापहे ननु करोषि तथैव गङ्गे
पाहीह मां प्रभुमहेश्वरकेशभूषे ॥८॥

पूर्वं यदाशरपतेः शरविद्धदेहा
देवास्तदा निखिलनिर्जरयाचिता त्वम् ।
तेषां सहायकरणे शितिकण्ठवीर्यं
धृत्वा चकर्थ ननु तारकशत्रुमूर्तिम् ॥९॥

सूर्यान्वयाब्धिरजनीकरसन्निभेन
पूर्वं भगीरथनृपेण परान् सहस्रात् ।
संवत्सरान् हि निरतेन तपस्सु नीता
पूतांश्चकार भवती ननु सागरांस्तान् ॥१०॥

शैलेन्द्रजाप्यसुलभापि जनान् पुनीषे
काश्यादिमेषु विषयेषु रयेण यान्ती ।
कोऽन्यो महात्मसदृशाद्य परोपकारे
ह्युच्चैः प्रदेशमपि वर्जयतीव मा त्वम् ॥११॥

श्रीकण्ठमौलिनिलये सुगिवावभासि
श्रीनायकस्य जगदेकगुरोरपीव ।
पादाम्बुजस्य मकरंदझरी विभासि
द्वैताग्निमूर्तिरिव देवजुने च भासि ॥१२॥

संक्रान्तहंसतनुभिश्च सहस्रशस्त्व-
त्तीरे निलिम्पशिविदे शिवदेहशुक्ले ।
हंसोक्तिभिर्गगनमम्ब तु सैकहंसं
हास्यास्पदं ननु करोषि तटस्थहंसे ॥१३॥

भक्त्या नमत्सु च जनेष्वभयप्रदात्रि
संक्रन्दनादिदनुजारिनुताङ्घ्रिपीठे ।
भीष्मप्रसूरपि मनोहरकान्तिकान्ते
त्वां कौशिकोऽहममले प्रणमामि नित्यम् ॥१४

संसारसारसहिताहिवराननोत्थ-
जिह्वोद्भवातिविषमूर्छितपाण्डुमूर्तिः ।
अन्धीकृतो भुजगभूषणभूषणार्हे
सम्प्राप्तवानहमतः परिपालयाम्ब ॥१५॥

त्वद्ध्यानकर्मपरवान् परमात्मरूपे
काङ्क्षामि भूतिमथवा जगदाधिपत्यम् ।
नाहं कदापि सुरभे हि भवामि मुक्तो
दु खाद्गुहादिव शिवे गुहजन्मभूस्त्वम् ॥१६॥

त्वत्तीरभूरिपरिरक्षितनीरवृक्ष-
मालेषु कुत्रचिदहं च चिदम्बरेशम् ।
छायास्थितश्च जटयाभिविराजमान-
-क्षामेऽपि नीलगलसंशयमेव कुर्वे ॥१७॥

दृष्ट्वात्मनाशदरतः किल देवि पावन्
मां मन्मथोऽजिनधरं च विडम्बयन्तम् ।
कामादिषट्सु रिपुषु प्रथमे विनाशं
प्राप्ते भवन्ति किमु पीडयितुं क्रुधाद्याः ॥१८॥

पङ्केरुहेण समतास्तियुगे च वक्त्रे
लोके किलास्ति चरणे च तथापि हस्ते ।
सर्वत्र दृश्यमिह तामरसं तु तोयेऽ-
प्याविष्करोति तव पद्ममयं शरीरम् ॥१९॥

वन्देऽरविन्दनयने नयमार्गबन्धो
त्वत्तीरके निवसति परिकल्प्य चारु ।
त्वन्नीरपानपरिपालितविग्रहोऽहं
सत्यं प्रयामि गिरिशस्य भुवं हरेर्वा ॥२०॥

मातस्तवामलजले पतितः खरोऽपि
श्वा चाथवा मृगवरोऽपि विहङ्गमोऽपि ।
प्राप्नोति सद्गतिमतीवसुदुर्लभां च
तीक्ष्णैस्तपोभिरपि किं मनुजास्सुशीलाः ॥२१॥

वन्दे पुनः पुनरहं न मुदं तु विन्दे
दृष्ट्वा मुहुर्मुहुरपीह सुखेन वासम्
काङ्क्षामि ते शुभजलेऽनुगृहाण देवि
त्वां मातरं शिशुरहं किमु यामि हित्वा ॥२२॥

रुद्रोत्तमाङ्गमतिलङ्घ्य विराजसे त्वं
जह्नोर्मुनेः करतलाञ्जरसोऽभवश्च ।
भूपं भगीरथमथान्वचरः सलीलं
चेत्यादिपुण्यकृतिभिर्भुवने श्रुतासि ॥२३॥

सिन्धोः प्रिये प्रियतमे प्रमथाधिपस्य
क्षोणीतलस्थितनदीषु वरे वराङ्गि ।
भागीरथि प्रभुरमेश्वरपादमाले
त्वामेव देवि ललिते शरणं प्रपन्नः ॥२४॥

मन्दाकिनीत्यमधिगत्य तटं त्वदीयं
संसारघोरगहनाद्बहिरेव यातुम् ।
स्तुत्वा नमामि शतशश्च करोमि पूजां
स्वीकृत्य सर्वमिह विष्णुपदि प्रसीद ॥२५॥

रम्भानिभोरुयुगलां सुरलोकवेश्यां
दृष्ट्वा भवं विषयसौख्यविमोहितात्मा ।
यद्दुष्कृतं यदिह तदद्युनदि क्षमस्व
मां कौशिकं च [illegible] पादनतोत्तमाङ्गम् ॥२६॥

श्रीकौशिकेन मुनिना भुवनेषु पूते
माला स्तुतेर्विरचिता रुचिरा चिरस्मि।
प्रीत्या गृहाण तव कन्धरभूषणं च
कृत्वा कुरुष्व विमले विमलं शुभे माम् ॥२७॥

श्रुत्वा श्रुतिद्वयरसायनतुल्यमेतत्
स्तोत्रं मुनेर्वदननिर्गतमर्थरम्यम् ।
प्रीता बभूव भुवनेषु पवित्रतीर्था
पश्चाद्रराज चलवीचिकरैश्शुभाङ्गी ॥२८॥

यत्र प्रभातसमयेऽसमलोचनाभा
आसाद्य तीरमथ नीरचये च कृत्वा ।
स्नानं ततस्सकलशास्त्रविभवाधिनाथा-
ध्याने नयन्ति समयं खलु तापसार्याः ॥२९॥

उर्वीधरोन्नतशिलातलशृङ्गभागा-
द्या वाहिनी पतति रौति रुवेन चोच्चैः ।
युद्धे यथारिभयदायकशङ्खनादि
दृष्टोद्भवो रवकरोऽद्भुतयन्त्रको वा ॥३०॥

या प्रान्तमध्यपतिता कुटिला च तस्मात्
श्रोत्रद्वयस्य विवरे च विदारयन्तम् ।
शब्दं प्रणीय ननु नृत्यति नीरबिन्दून्
संक्षिप्य मौक्तिकनिभान् परितो विभाति ॥

शङ्खाभिधाभिरथ चक्रनिभाभिरुच्चैः
पूर्णा च पूर्णविधुवर्णनिजार्णसो सा
रेखाभिरेव जनिताभिरपां समूहे
सामुद्रिकागम इवाति विराजते स्म ॥३२॥

हंसाश्रिता भरतवर्षभुवीह गङ्गा
व्योमस्थलीव नु विराजति राजताम्बुः ।
श्रीरङ्गके कमलजा च विभाति यस्याः
श्रीर्वा विभात्यकमलापि मलापहन्त्री ॥२३॥

हंसादिपक्षिनिवहैर्विकिरद्भिराशु
ध्यानाश्च तीरनिलयैर्द्विजवर्यवृन्दैः ।
जीवोपमैर्निगमशास्त्रचयं पठद्भि-
र्वाणीव सा विजयते हि न वीणयापि ॥२४॥

ताम्रैश्च तामरसपुष्पशतैर्धुनी सा
निष्पङ्कपादरससन्निभतोयवेगा ।
दुर्वर्णवर्णनिजकान्तिरनिन्द्यमूर्ति-
र्विज्ञानशास्त्रमिव केन न भाविताऽस्ति ॥२५॥

दृष्ट्वा शिवं शशिकलासहितं तदीयां
कैलासशैलभुवने सगिरीन्द्रकन्याम् ।
प्रायः क्रुधा भुवमिमां च जटां सपत्नीं
शृङ्गारदर्शनभुवावततार हित्वा ॥२६॥

प्रायोऽपता सकललोकपतिं च विष्णुं
रामावतारपरमेव नरं विदित्वा
तन्मार्गणे भुवमवाप्य खलु प्रयाति
माता यतः पदयुगे युगशासितुः सा ॥२७॥

प्रातर्नदीं गगनगास्सुरकिन्नराद्याः
संप्राप्य तां सदयिताश्च दिने दिने ते ।
क्रीडाविलासमुखदत्तधियो महान्तं
कालं नयन्ति न विदन्ति तु नीतकालम् ॥३८॥

प्राणप्रियाभिरुपगम्य शुचिक्रियासु
विद्याधराः प्रतिदिनं सह सुन्दरीभिः ।
सान्द्रप्रमोदभरिता भरताख्यदेशे
गङ्गामनङ्गविधुरा विनयन्ति कालम् ॥३९॥

गङ्गातटे च जलकेलिशतानि मोक्तुं
प्रातस्समेत्य विबुधाः सहसा रमन्ते ।
कान्ता विमाननिलयादवतार्य भूयः
सोपानपङ्क्तिषु पदानि निधाय नद्याः ॥४०॥

मन्दाकिनीतटजुषां खलु निर्जराणां
दिव्यांबरादिभिरलङ्कृतविग्रहाणाम् ।
दैनन्दिनं चरितमित्यमभून्मनोज्ञं
शृङ्गारकेलिभरितं वनितासखानाम् ॥४१॥

सिद्धाङ्गनाथ सधवा धवलास्यबिम्बा
नीलाम्बरावृतनिजावयवा प्रभाते
मन्दं मुकुन्दरमणीव विवेश नीरं
नीरोद्भवाक्षियुगला जलकेलिमग्ना ॥४२॥

प्रेमाख्यपुष्पसगपञ्चकमात्मनेत्रा-
   द्रोणाद्विसृज्य मदनस्य वशं प्रणीय ।
कान्तं च कान्तनिटिला कुशला स्म भाति
   हस्तं नितम्बनिलये विनिवेश्य चैका ॥४३॥

विद्याधरः स्वदयिताकमनीयरूपं
   दृष्ट्वापि भूरि न तु तृप्तमना नियन्तुम् ।
गाङ्गे ययौ द्रुततरेण रयेण तोये
   नीवीं मुमोच भुवने स्वयमेव तस्याः ॥४४॥

मुक्तावली गळगता गगनाङ्गनाया
   उच्चैः पयोधरविभागविराजिता च ।
गच्छद्भिरम्बरतले विबुधैर्विमानै-
   र्दृष्टा रराज गिरिकाननगेव गङ्गा ॥४५॥

लोलेक्षणा नववधूर्नवनीरकेल्यां
   तोयं विलोक्य चकिता च नतोत्तमाङ्गा ।
अत्याहितं निजहिताय तु नाटयन्ती
   नाथं प्रियं पुळकिता भृशमालिलिङ्ग ॥४६॥

अन्या तदा निजपतिं सहितं सपत्न्या
   निध्याय मन्युवशगाक्षियुगोद्भवेन ।
ईर्ष्याख्यसायकवरेण वरं प्रणुद्य
   वेगात्पिधाय पटकेन ननु जगाम ॥४७॥

ऊर्ध्वं मृदुतमं कनकाममेको
राजीवनालसदृशं हि दृशा निपीय ।
कान्तश्चुचुम्ब दयितं दयिताप्रियार्थ-
मात्मानमेव कृतिनं हृदि मन्यते स्म ॥४८॥

कार्ची सुवर्णतनुयष्टिरयाम्बुकेल्यां
नारी विहाय पतिसङ्गमकाङ्क्षयान्या ।
विद्धा बभौ प्रियतमस्य पुरो बबन्ध
नीवीं न कामसुखसिन्धुजले निमङ्क्तुम् ॥४९॥

पानीयकेलिकृतिषु प्रमदं शुभाङ्ग्या
नीलाञ्जनं नयनयोर्निपपात गाङ्गे ।
सा निम्नगा तु यमुनासरिताप्ययुक्ता
भूयो बभौ सयमुनेव वलक्षवारिः ॥५०॥

गण्डस्थलादपि सुधान्वयसुन्दरीणां
तद्वत्पयोधरयुगादपि कुङ्कुमादि ।
द्रव्याणि वारिणि शुभे पतितानि पश्चा-
घक्रुर्नदीमिव पयोनिधिशङ्कनीयाम् ॥५१॥

केशावलिः सितजले पतिताङ्गनाया
रेजे यथासितभुजङ्गतनुः शिवाङ्के ।
प्रायोऽथवा भ्रमरपङ्क्तिरिवातिनीला
श्वेतप्रसूनचयमध्यगता लतायाम् ॥५२॥

यादांसि तत्र भुवने सुरयामिनीनां
क्रीडामनन्यजविकारमयां विलोक्य ।
स्वैरं ततः प्रियजनैर्मुदितानि तद्वत्
कर्तुं क्रियास्त्वरितमेव समारभन्त ॥१३॥

भ्रान्त्या तदा जलभुजङ्गम एक एव
बाहुं बबन्ध सहसा निजदेहदाम्ना ।
कस्याश्चिदात्मदयितेति सुराङ्गनायाः
सा भीरुराप रमणं च तमालिलिङ्ग ॥१४॥

भोगैर्यथेप्सितमनङ्गसुखानि भुक्त्वा
श्रान्तास्सुरास्सवनिता गगनं प्रयातुम् ।
प्रारेभिरे सुरतजश्रमशान्तिहेतोः
स्वेदाम्बुबिन्दुपरिभूषितविग्रहास्ते ॥१५॥

भूयो नभोरथमथाखिलदैवतानि
स्वारुह्य मारुतसमेप्सितवेगयुक्ताः ।
कान्ताभिरात्महृदयान्यपि तोषयन्ति
सँल्लापरञ्जितमनांसि ययुश्शुभानि ॥१६॥

कश्चिद्विमाननिलये च रयेण युक्ते
कान्तां निजाङ्कविषये विनिवेश्य वामे ।
कृत्वा च तां सकमलां कमलासनां च
ह्यात्मानमेव मनुते स्म रमेशकल्पम् ॥१७॥

कान्तागलं भुजलतापरिवेष्टितं च
कृत्वा पुरो न रतितृप्तमना विमाने ।
तस्याः पपौ मधुयुतं मधुराधरं स
भागीरथीजलकणात्परमं पवित्रम् ॥५८॥

यस्या जले प्रतिदिनं विबुधा रमन्ते
चेत्थं प्रियाभिरनवद्यशरीरिकाभिः ।
तां मातरं त्रिभुवनस्य च देवसिन्धुं
धात्रीमिवैक्षत ककुत्स्थकुलप्रदीपः ॥५९॥

स्तम्बेरमा मदकला दिनमध्यकाले
संप्राप्य भूरिमुदमेव समाप्नुवन्ति ।
स्नानाद्यतो धुतमदाश्च धुताघसङ्घा
भूत्वा प्रयान्त्यभिगृहं परिधूतशुण्डाः ॥६०॥

रन्ध्रेषु यो नवसु पूर्णमदो महेभो
भूरिस्रवन्मदजलो मलिनीकृताङ्गः ।
अन्तर्बहिश्च परिशुद्धिमवाप्तुमस्यां
स्नानेच्छया सुरनदीं प्रति धावति स्म ॥६१॥

कश्चिद्गजो द्रुतगतिर्मदविह्वलश्च
शुण्डाग्रमेव गगनोन्नमितं विधाय ।
भूयो रयेण चकितानपि बालसिंहा-
नुच्चार्य बृंहणरवं निममज्ज नीरे ॥६२॥

दृष्ट्वा जले पतितमेनमिभं महान्तं
याद्रांसि साध्वसयुतानि ययुर्द्रुतं हि ।
आत्माभिरक्षणरतानि समस्तदिक्षु
प्रेताधिपं गजममुं विगणय्य साक्षात् ॥६३॥

अन्यो मदोदकनदीभिरथायुताभिः
श्यामात्मदेहविषयप्रभवाभिरूढः ।
भूयाँल्लमाविव हिमाद्रिरनल्पवीर्यो
गङ्गादिसिन्धुनिवहाप्लुतनीलकायः ॥६४॥

दन्तो महानपरहस्तिवरस्य नीरे
स्थित्वा निमज्जनपरस्य तदम्बुवर्णः ।
हस्ती तु नष्टमिह तं मनसा विभाव्य
भ्रान्त्या ननर्त च तटस्थजनो जहास ॥६५॥

काशीस्थिताः प्रतिदिनं मनुजा जलौघै-
र्गाङ्गैस्सुवर्णघटकान् परिपूर्य पश्चात् ।
गत्वा गृहाणि गृहिणीसहिता हिताय
श्रीविश्वनाथमनघं स्नपयन्ति भक्त्या ॥६६॥

यां भारतीयमनुजाः सरितं समाहुः
साक्षाज्जनाय दुरितौघनिपीडिताय ।
निर्वाणसौख्यमनघं जननीं प्रदातुं
भूभागवासनिरतामिति निष्कलङ्काम् ॥६७॥

नानादिगन्तविषयागतमानवा या-
मागत्य भक्तिरसरञ्जितपद्यसङ्घैः ।
स्तुत्वा प्रयान्ति परिपूतमनोविताना
निस्संशयं सुकृतिनः खलु ते न चान्याः ॥६८॥

नागाधिपो नगपतेः प्रथमात्मजायां
स्नात्वा चिराय बहुपूतबहिःशरीरः ।
अन्तश्च निर्गतमलो हि बुभूषुरेव
तृष्णाच्छलेन सलिलं पिबति स्म गाङ्गम् ॥६९॥

मन्दारपुष्पसमकान्तिसलीलकाया
वन्दारुमर्त्यदुरितानि विनाशयन्ती ।
वृन्दारकैरनुदिनं परिपूज्यमाना
कन्दासितोत्पलशतेन यूता विभाति ॥७०॥

दन्ताञ्चलेन तटभूमिमथोत्खनय्य
वप्रक्रियासु तटिनीनिकटे तदीये ।
मत्तो मतङ्गजसुराधिपती रराज
नीलाम्बुवाह इव भूधरसानुलग्नः ॥७१॥

इन्दिन्दिरा गजमदोदकपानमत्ता
गायन्ति कर्णमधुरं च रसोज्ज्वलं च ।
इन्दीवराक्षियुगलाः कलकण्ठवत्यः
सङ्गीतशास्त्रकुशलास्तु यथा समाजे ॥७२॥

श्रीपर्णवद्विशदकर्णयुगं धुवंश्च
सूक्ष्माक्षियुग्ममभितो गजराट् प्रसार्य ।
गाङ्गे तटे गुल्ममात्मशरीरवाहो
लाङ्गूलचालनधुनालिरगच्छदेकः ॥७३॥

सायंदिने दिनकरस्य करैस्सहस्रैः
स्पृष्टा सुवर्णसदृशैरपि या सुशीला ।
मत्वान्यपूरुषममुं महनीयकीर्ति
यात्यावृतेव च भयेन रयेण गङ्गा ॥७४॥

मन्दानिलेन सततं परिवीजिता या
व्योमातपत्रपरिसूचितराजचिह्ना ।
पद्मैः श्रियः प्रभवहेतुभिरावृताङ्गी
राज्ञीव सर्वभुवनस्य रराज गङ्गा ॥७५॥

नक्तन्दिवं दिविषदां सुखहेतुरेषा
भूवासिनामपि तथैव सुखं प्रदातुम् ।
क्षोणीधरेन्द्रतनुनातिरयेण याति
तस्यास्तटे रघुवरौ तु ननन्दतुस्तौ ॥७६॥

भक्त्याथ तस्यै रघुवंशजातः स्वर्गापगायै गुरुनायपत्न्यै ।
नतस्वशीर्षश्च नमश्चकार सलक्ष्मणः प्राप मनःप्रमोदम् ॥७७॥

ततस्तपोयज्ञधना मुनीन्द्रास्तरङ्गिणीतीर्थनिधौ ममज्जुः ।
न केवलं पूतबहिःशरीराः परन्तु पूताश्च बभूवुरन्तः ॥७८॥

मुनिर्नियन्ता सकलेन्द्रियाणां कृतावगाहःस तु पुण्यतीर्थे ।
जितारिषट्कस्तु तनूनपातं सन्तोषयामास समिद्भिरार्यः ॥७९॥

इति धुतनिजपापास्तापसास्ते समाप्य
ज्वलननमनकार्यं जाह्नवीतीरभूमौ ।
तदनु सनृपपुत्रा गाधिसूनोः पुरस्ता-
दुपविविशुरथैते श्रीनिवासं प्रणेमुः ॥८०॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

॥ इति श्रीसीतास्वयंवरे महाकाव्ये श्र्यङ्के जाह्नवीवर्णनम् ॥
॥ नाम पञ्चमः सर्गः ॥

---

॥ षष्ठः सर्गः ॥

## ॥ गिरिजापरिणयः ॥

अथ रामो विशालाक्षः श्रीनिवासस्स्वयं विभुः ।
सर्ववित्सोऽपि पप्रच्छ विश्वामित्रं महामुनिम् ॥१॥

बालो बालमृगचक्षुर्भगचक्षुःकुलोद्भवः ।
मुरारिर्मध्यमूर्तिश्च मूर्तिमानिव मन्मथः ॥२॥

आत्मपादनखोद्दीप्तचन्द्रमिरिन्दमः ।
तपोभिरपि भूयिष्ठैर्नियमैश्च सुदुर्लभः ॥३॥

सदा सादरभक्तानां शिरस्सु प्रणतेषु च ।
पादाग्रनखचन्द्राणां किरणान् संविसारयन् ॥४॥

स्वजानुमुकुरकान्तस्वीयोर्मिकबहुप्रभः ।
प्रभुस्सर्वस्य लोकस्य लोकविश्रुतकीर्तिमान् ॥५॥

यज्ञोपवीतसंश्लिष्टगात्रश्रीर्वृत्रहार्चितः ।
लक्ष्मीवान् राजलक्ष्मापि लक्ष्मणप्रियसोदरः ॥६॥

रेखाभिरुज्ज्वलाभिश्च युक्तमात्मपदाम्बुजम् ।
क्षिपन्निव धरित्र्यङ्के चित्रं प्रतिनिधिं शुभम् ॥७॥

इन्दिन्दिरचयश्यामकेशवान् केशवः स्वयम् ।
नीलमेघोपमे देहे यस्य मालास्ति वा तडित् ॥८॥

असकृत्पीतमादेवीकान्ताधररसोऽप्यसौ ।
एकवारमविज्ञातरसोऽसावित्यपि स्थितः ॥९॥

कस्तूरीतिलकेनैव राजितभ्रूयुगान्तरः ।
सुवर्णकुण्डलोद्दीप्तरम्यगण्डप्रदेशकः ॥१०॥

द्योतयन् ककुभस्सर्वा दन्तकान्त्या रघूद्वहः ।
निर्मलां देवतां वाचामानयन्निव सन्निधिम् ॥११॥

परमां मुदमाप्नोमि वीक्ष्य गङ्गां नदीं मुहुः ।
स्तुत्वा नत्वार्चनं कृत्वा नास्त्यन्तं मे मुदः प्रभो ॥
शतबृंहणतुल्यश्च शब्दो देवनदीभवः ।
करोति युगपत्स्वान्ते मुदं मे चाद्भुतां भियम् ॥१२

नेत्रे मे मुनिशार्दूलापरकार्यपराङ्मुखे ।
तामेव देवतां साक्षादिच्छतश्च समीक्षितुम् ॥१४॥

पुरा विरिञ्चिपाणिस्थपात्रस्था शुभ्रजीवना ।
नदी श्रीपुण्डरीकाक्षपादाब्जं पर्यवर्तत ॥१५॥

तदनन्तरमीशानजटारण्यमगाहत ।
तथापि भगवन् प्रेक्षे भूमिस्थां सर्वमङ्गलाम् ॥१६॥

कथमेषा महादेवी भूमिमेनामवातरत् ।
कथामित्यादि वा देव श्रोतुमिच्छामि सानुजः॥१७॥

कारुण्यात्करुणासिन्धो मयि जल्पति बालके ।
प्रसीदतु भवान् सर्वां विस्तरेण कथामिमाम् ॥१८॥

तपोधनाग्रगीर्वाणी राघवस्याशृणोद्यदा ।
मत्वा कृतिनमात्मानमारेभे वक्तुमीदृशम् ॥१९॥

रामभद्र जगन्नाथ शृणु मे परमं वचः ।
कथयामि कथां दिव्यां पार्वत्याः प्रथमं तव ॥२०॥

अस्ति भारतदेशस्य दिश्युदीच्यां महोन्नतः ।
हिमवान्नाम शैलेन्द्रः शृङ्गत्रयविराजितः ॥२१॥

गौरीशङ्करनामैकः कूटो यत्र महीधरे ।
भाज्वल्यमानस्तस्यास्ति किरीटकलशो यथा॥२२

हेमगङ्गाभिधः श्रीमान् द्वितीयः शिखरः स्थितः ।
श्वेतगिर्यङ्कितश्चापि तृतीयः शोभयान्वितः ॥२३॥

यत्र विद्याधरा यक्षाः किन्नराः सुरसत्तमाः ।
विमानस्थाः सह स्त्रीभिर्गायन्ति मधुरैः स्वरैः॥२४॥

पुन्नागकिंशुकाशोकचम्पकादिमहीरुहाः ।
फलपुष्पावनम्राश्च यत्र सन्ति महीधरे ॥२५॥

पुन्नागचमरीव्याघ्रशार्दूलादिमहामृगाः ।
भयङ्कररवा यत्र त्रासयन्त्यखिलं जनम् ॥२६॥

लतासहस्रसंवीतो यो महीध्रमहीपतिः ।
हारसंवीतकण्ठश्च साक्षाद्राजेव राजते ॥२७॥

सर्वसङ्गपरित्यागी योगी ध्यानपरायणः ।
आत्मनः सौख्यमाप्नोति मुक्तिं यत्र च दुर्लभाम् ॥

आत्मनः समदर्शित्वमाविष्कर्तुं हिमालयः ।
दुर्वर्णं च सुवर्णं च युगपद्वहतीह यः ॥२९॥

यस्माद्विष्णुपदीसिन्धुयमुनासरितश्शुभाः ।
प्रादुर्भूय वहन्त्यस्मिन् देशे भारतसौख्यदाः ॥३०॥

अत्युन्नतं शिरो यस्य तपःकालेऽपि शीतलम् ।
आविष्करोति शैलेन्द्रशान्तभावं विपत्स्वपि ॥३१॥

सुन्दरीमयदातापि काननैश्च मृगाधिपैः ।
तासां सर्वाङ्गसौन्दर्यं वृक्षादिषु बिभर्ति यः ॥३२॥

नारीणां नीरजाक्षीणामक्षीणामीक्षणप्रभाम् ।
यत्र राजिः सरोजानां सरसा वहतीश्वर ॥३३॥

मृद्वीकास्तनकद्वन्द्वं वर्तुलं यत्र पर्वते ।
मृदङ्गीस्तनसौन्दर्यस्मारकं नु विराजते ॥३४॥

मार्दवं कदलीस्तम्भयुग्मस्य च महीधरे ।
स्मारयिष्यति तन्वङ्ग्याश्चोरुद्वयमनिन्दितम् ॥३६॥
तमालवृक्षमाला च यत्र रामाचलेश्वरे ।
श्यामायाः श्यामकेशौघमासा भाति शुभा न किम् ॥
मल्लिकाप्रतती यत्र नवीनात्मसुमेषु च ।
वराङ्गनादन्तपङ्क्तिभासं हासं बिभर्ति हि ॥३७॥
यस्योन्नत शिरो गन्तुं कलिकाले तु पण्डिताः ।
विज्ञाने ज्ञानवृद्धचर्यं यतन्ते नूतनानिलैः ॥३८॥
प्रपञ्चेऽत्युन्नतं शृङ्गमतिक्रम्य महीभृतः ।
बिम्बग्राहिभिरेवाप चित्राण्याकुर्वते नराः ॥३९॥
केचिदाशामपि त्यक्त्वा जीविते स्वे वरा नराः ।
पर्वतं शोषयन्त्येव तद्वैभवजिगीषवः ॥४०॥
तथापि गोत्रराड्राम न किञ्चिद्विकृतिं गतः ।
स्थिपति महात्मसदृशीमाप्त्वा निश्चलशीलवान् ॥४१
इत्यादिवर्णनासाध्यशीलसन्कान्तविग्रहः ।
धराधरमहाराजो वर्धते स्मानुवत्सरम् ॥४२॥
कालेन गच्छता श्रीमान्नगराजः प्रतापवान् ।
रूपयौवनसंपन्नामुपयेमे मनोरमाम् ॥४३॥
साक्षान्मनोरमां राम हेमभूमिधरोद्भवाम् ।
प्राप्तकाले यथाकामं बुभुजे कामपीडितः ॥४४॥

वरारोहाद्रिचक्रस्य शक्रं चक्रे मुदान्वितम् ।
इत्थं सुशीलाः कुर्वन्ति पतिं पतिपरायणाः ॥४५॥

हिमालयोऽपि शैलेन्द्रो बभूव स हि माल्यः ।
प्राप्य मेरुसुतां राम रमारूपां मनोरमाम् ॥४६॥

मेरुशैलभवा सापि वनिता मनतीसमा ।
आश्रयार्थं महावृक्षमप्राप्यैव गिरिं ययौ ॥४७॥

अनया वरवर्णिन्या ह्यचलोऽपि चलाचलः ।
बभूव सुन्दरीमैत्री चैवं खलु नृणामपि ॥४८॥

पपौ माधुर्यमधरे धराधरपुरन्दरः ।
कामिन्याः कामवर्षिन्याः प्रियायाः प्रीतिदायकः ॥

नीलकण्ठस्वनं कण्ठं प्रियायास्स मनोरमम् ।
बबन्ध बाहुपाशेन बाहुवल्लयापि तस्य सा ॥५०॥

सुवर्णवर्णयोस्तस्याः स्वर्णभूधरजन्मनोः ।
कपोलयोश्चुचुम्बासौ सरसं रसपूर्णयोः ॥५१॥

आपीनं च कुचद्वन्द्वं पीडयामास गोत्रराट् ।
तदप्यस्य कठोरत्वं सेहे काठिन्यसंयुतम् ॥५२॥

कामं चिक्रीड कामार्तो चक्रवर्ती महीभृताम् ।
तया निनाय कालं च कश्चित्काञ्चनमालया ॥५३॥

क्रमेणानन्दमेवासौ चकाङ्क्ष तनुमोद्भवम् ।
तत्प्राप्त्यै हृदये धीरः प्रणनामेष्टदेवताम् ॥५४॥

अचिरादचलेन्द्रस्य सदया सेष्टदेवता ।
सन्तुष्टा तस्य पूजायाः पपाराथ मनोरथम् ॥९५॥
अन्तर्वत्नी बभूवाथ वसुधाधरवल्लभा ।
दृश्यन्ते स्म तदा तस्यां लक्षणान्यखिलानि च ॥९६
प्रकृत्या मृदुसर्वाङ्गी शिशुभारेण वर्धिता ।
रत्नसौवर्णवैदूर्यभूषणं विससर्ज सा ॥९७॥
तनुमध्या स्वभावेन हिमालयपतिव्रता ।
गर्भधारणहेतोस्सा बभूवातनुमध्यमा ॥९८॥
अपूर्वां कान्तिमापेदेऽप्यन्तःशिशुरनन्तरम् ।
मनोरमा सती राम चन्द्रगर्भेव पूर्णिमा ॥९९॥
तस्याः कान्तिसमापूर्णौ मेरुपुत्र्याः कपोलकौ ।
बभूवतुः पाण्डुवर्णौ यथा नीरसनीरदौ ॥६०॥
नासाद्वारेण निश्वासवायुं गर्भभरालसा ।
भूरिदुःखेन सा कान्ता बहिर्गमयति स्म च ॥६१॥
मत्तमातङ्गगमना शैलपत्नी स्वभावतः ।
निर्भरं गर्भभारेण मन्दगागान्नितम्बिनी ॥६२॥
तस्याः सर्वाङ्गसुन्दर्याः कालो मन्दतरोऽभवत् ।
यतः सा गर्भभारेण क्षणं वर्षममन्यत ॥६३॥
ततस्तत्पत्युरत्यन्तहर्षदो नवमश्च माः ।
आजगाम अगामाय कन्यां दत्वा सुलक्षणाम् ॥६४

सुकुमारी नगस्याभूत्कन्या मन्दाकिनीति सा।
ज्येष्ठा श्रेष्ठा नदीनां च न दीना निर्मलोदका ॥६५
अर्थिभ्योऽदात्सुरेभ्यस्तां ज्येष्ठामपि नगेश्वरः।
सदा सत्पुरुषाः सन्ति परार्थैकप्रयोजनाः ॥६६॥
पुनः पद्मविशालाक्षी दयिता पर्वतपमोः।
कन्यां कनकवर्णाङ्गीं द्वितीयां सुषुवे शिवाम् ॥६७
पार्वतीबाललीलाभिः पितरौ तौ ननन्दतुः।
ददाति कस्य नानन्दं बाललीला मनोहरा ॥६८॥
ववृधे पर्वतेशस्य दुहिता राजमन्दिरे।
निनाय शैशवं शीघ्रं चाप्नोति स्माथ यौवनम् ॥६९
पूर्वजन्म स्मरन्ती सा बालाबालेन्दुसुन्दरी।
याचते स्म वरं तातं बुभूषुर्हरकिङ्करी ॥७०॥
तात त्वं सुकृती यस्मात्सर्वलोकमहेश्वरः।
भगवान् चन्द्रचूडोऽत्र तनुते तापदं तपः ॥७१॥
न ज्ञातो नास्ति ते तात महिमा तस्य धूर्जटेः।
स हि विश्वस्य कर्ता च भर्ता हर्ता त्रिमूर्तिमान् ॥७२॥
भक्तानां मुक्तिमार्गे च स्थापितात्मधियां सदा।
ब्रह्मध्याननिमग्नानां मिथः प्रियकरो भवः ॥७३॥
भवोऽपि भवसंहर्ता वामदेवोऽप्यवामनः।
कृत्तिवासा अपि श्रीमान्निष्कलङ्कः कलङ्कहा ॥७४॥

कपालमालिकाधारी भस्मभूषितविग्रहः ।
अङ्गदीकृतबालाहिर्गङ्गालङ्कृतमूर्धजः ॥७५॥
शेखरीकृतबालेन्दुर्नेत्रीकृतधनञ्जयः ।
अम्बरीकृतचर्मा च भस्मीकृतरतीश्वरः ॥७६॥
तस्य देवाप्रमेयस्य सेवां कृत्वा कृतार्थताम् ।
भजामि तदहं याचे त्वामनुज्ञां महीधर ॥७७॥
दुर्लभं हि पदद्वन्द्वं तस्य मे शिरसि स्थितम् ।
कर्तुमिच्छामि तस्मात्त्वं गमने मे मतिं कुरु ॥७८॥
यत्पदं देवदेवस्य कथ्यते दुर्लभं भुवि ।
तद्द्वारि नः पुरस्यास्ति नैतत्किं भाग्यकारणम् ॥७९
श्रूयते सर्वदा तात जनकाः प्रियदा इति ।
अप्रियं याचितं नाथ मया ते सुतयाचल ॥८०॥
पुनामि केवलं नाहमात्मानं साधुसेवया ।
किंत्वस्मदीयं सकलं कुलं कुर्वे च पावनम् ॥८१॥
कीर्तिस्तेऽपि गुरो गुर्वी भवत्याचन्द्रतारकम् ।
महिमा तव गेयः स्याद्गन्धर्वैरपि किन्नरैः ॥८२॥
भवान्मामनुजानातु यान्तीं सेवार्थमीशितुः ।
साधवश्शुभकार्याणां प्रतिकूला भवन्ति न ॥८३॥
विरराम विशालाक्षी पितरं साधुवल्लभम् ।
उक्त्वेदं मधुरं वाक्यं विनयेन समन्विता ॥८४॥

गौरीमुखसुधारश्मिनिर्गतां मधुरां सुधाम् ।
परिपीयापि मग्नोऽभूच्चिन्तोदधिमहान्तरे ॥८५॥

वात्सल्यं हि तनूजायां प्रतिकूलं चकार तम् ।
भक्तिस्तु निर्मला तस्मिन्ननुकूलं पिनाकिनि ॥८६॥

कुमारीप्रार्थनां भूरि चिन्तयित्वा चिरं गिरिः ।
शिरःकम्पेन चादेशं दत्त्वा तूष्णीं बभूव सः ॥८७॥

ततः प्रभृति सा प्रीता चन्द्रशेखरकिङ्करी ।
सिषेवेऽनन्यचित्ता तं निस्तन्द्रा निरुपप्लवा ॥८८॥

विमुखोऽपि बहिः शम्भुः सर्वज्ञो परिवस्यया ।
उमया कृतया तुष्टः सर्वं जग्राह चेतसा ॥८९॥

अस्मिन् सुसमये राम सहस्राक्षप्रचोदितः ।
कामः कामवशं कर्तुं विरागिषु पुरःसरम् ॥९०॥

आजगाम सकामांश्च कर्तुं देवान्विपीडितान् ।
सवसन्तो सचापोऽस्य सशरः शङ्करं प्रति ॥९१॥

वसन्तवैभवापूर्णं कृत्वा सर्वं तपोवनम् ।
अरविन्दादिबाणौघं मुमोचाथ शिवं प्रति ॥९२॥

तपोविघ्नेन संक्रुद्धो रुद्रो नेत्रविभावसुम् ।
मुक्त्वा तं भस्मसाच्चक्रे विद्युच्छक्तिरिव क्षणे ॥९३

विहाय गिरिनाथस्य देशं चन्द्रार्धशेखरः ।
सह विघ्नजकोपेन लोचनागोचरोऽभवत् ॥९४॥

मनस्विनी ततः क्षिप्रं पार्वती भाविभावना ।
मन्त्रैर्या न सम्पन्ना सापि भग्नमनोरथा ॥९५॥

लब्ध्वा पित्रोरनुज्ञां च दुर्लभां पार्वती सती ।
कान्तारमचरत्कान्ता कान्तालोकनतत्परा ॥९६॥

मुनिवनेषु नाभ्यस्ता गिरिजापि ततोऽधिकम् ।
समाधैकाग्रचित्तेन ध्यायन्ती वल्लभं शिवम् ॥९७॥

अनन्याश्चिन्तयन्तो ये चिदानन्दं भजन्ति ते ।
क्षिप्रं तमेव पश्यन्ति भक्ताधीनः शिवो यतः ॥९८

कदाचित्सच्चिदानन्दो वृद्धविप्रस्तथैव सः ।
मृत्याश्रमं श्रमं चास्या आजगाम व्यपोहितुम् ॥९९

उवाच वचनं मन्दं मन्दहासलसन्मुखः ।
सपर्यानन्तरं शम्भुर्ब्रह्मचारिविधे स्थितः ॥१००॥

गौरीमभिमुखीकृत्य तपस्यां तपतां वरः ।
कोमलाङ्गीमपि क्लिष्टेस्तपोभिश्च तनूकृताम् ॥१०१॥

अयि सुन्दरि कस्मात्त्वमीदृशी वनमाश्रिता ।
किमर्थमागतारण्यं हित्वा शैलेन्द्रमन्दिरम् ॥१०२॥

कथं ते कोमलौ पादौ काठिन्यं काननोद्भवम् ।
सहेते हे विशालाक्षि हर्म्यार्हौ कमलोपमौ ॥१०३॥

सन्क्रान्तस्यापि सूर्यस्य किरणान् सोढुमप्रभुः ।
कथं त्वं सहसे सास्रादंशुमालिनमुज्ज्वलम् ॥१०४

यदि तेऽस्ति वराकाङ्क्षा तपसोऽपि विरम्यताम् ।
तेनैवान्विष्यसे देवि यत्त्वं सर्वाङ्गसुन्दरी ॥१०५॥

राजपुत्रि समस्तानि सन्ति सौख्यानि मन्दिरे ।
पितुस्तेऽपि तपःस्यासि हेतुमत्राखिलं वद ॥१०६॥

इत्यादि वर्णिना श्रुत्वा कथितं पार्वती तदा ।
सखीमन्तरतः कृत्वा जगादात्मस्पृहां हरे ॥१०७॥

सख्या पर्वतराजस्य पुत्र्या चोदितया ततः ।
ज्ञात्वा गिरीशविन्यस्तचित्तां तां वदति स्म सः ॥

क्व ते रूपं वरारोहे विश्वमोहकरं वरम् ।
क्व तस्य भयदं रूपं विरूपाक्षस्य कोमले ॥१०९॥

त्वं दिव्यभूषणाढ्या तु स हि पन्नगभूषणः ।
त्वं हेमवसना गौरि स च दिग्वसनः शिवः॥११०

विरोधगुणयोरेवं कथं भवति सङ्गमः ।
सुवर्णाभरणे रत्नं शोभते बहु नान्यथा ॥१११॥

विरमास्मात्प्रयत्नात्त्वं पितुर्गेहं यथासुखम् ।
गत्वा भव विशालाक्षि मत्वं निन्दस्य शूलिनम् ॥११२

श्रुत्वैवं विश्वनाथस्य किङ्करी शैलकन्यका ।
विप्रेणोक्तापि तत्राभूत् क्रुद्धा सा दुःखिता तथा ॥

लोहिताक्षीं ततो दृष्ट्वा प्रियेव परमेश्वरः ।
पातिव्रत्येन तपसा तुष्ट्यास्याः पुरो बभौ ॥११४॥

शङ्करं करदूरस्थं साक्षाद्भक्तप्रियं शिवम् ।
दृष्ट्वा बभूव तुष्टापि कम्पमानेव साध्वसात् ॥११६॥

विनम्रां लज्जया गौरीं वेपमानां भियेव च ।
जग्राह पाणिना शम्भुः स्वाङ्के तां सन्न्यवेशयत् ॥

इच्छया पर्वतेशस्य दुहितुः स पितुर्गृहम् ।
गन्तुमाज्ञां ददौ तस्यै सज्जना ननु धर्मपाः ॥११७॥

सप्तर्षयो महाप्राज्ञाः सप्तमिश्च क्षणैस्ततः ।
आजग्मुरीश्वराज्ञप्ता अरुन्धत्या समं द्रुतम् ॥११८॥

नियुज्य देवो देवर्षीन् देवकार्यकृतत्वरः ।
शम्भुर्गौरीगृहं प्राप पाणिग्रहणकर्मणे ॥११९॥

हिमवानात्मजां दातुं गौरीं मृत्युञ्जयाय सः ।
मनस्यकेऽथ मेने च कुमारीममरीं वराम् ॥१२०॥

मेने मेनापि कल्याणी पुत्रीकल्याणकाङ्क्षिणी ।
तां धर्मपत्नीं लोकानां शम्भुर्लोकमातरम् ॥१२१

पुरोहितास्ततो राम मुहूर्तं मङ्गलप्रदम् ।
विवाहोत्सवकार्यस्य निश्चयं चक्रुरञ्जसा ॥१२२॥

वृषपृष्ठसमासीनः पशूनां पतिरव्ययः ।
गुणैर्गणैः परीतः समाजगामोत्सवं वरम् ॥१२३॥

पौरनारीक्षणैर्दृष्टो विविधायुधसंयुतः ।
पुरन्दरादिदेवौघैरनुयातः स शङ्करः ॥१२४॥

जामात्रे स्वागतं दातुं द्वाःस्थेन श्वशुरेण च ।
युक्तं तस्यालयं प्राप्य तं ननाम महेश्वरः ॥१२६॥

सर्ववन्द्योऽपि सर्वेशो ववन्दे श्वशुरं गिरिम् ।
वन्दितस्तेन सोऽप्यासीद् भूरि संकोचमाश्रितः ॥

सर्वे सम्बन्धिनो देवा यथावन्मानितास्ततः ।
सूर्यध्वनिसमापूर्णं विविशुः शैलमन्दिरम् ॥१२७॥

मदनमथनकर्ता मन्दिरे मङ्गलार्हे
गिरिपतितनुजायाः पाणिपद्मं गृहीत्वा ।
नमुचिरिपुमुखानां मानसे निर्जराणां
मुदमतनुत दिव्यां श्रीमदां श्रीयुताङ्घ्रिः ॥१२८॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

॥ इति श्रीसीतास्वयंवरे त्र्यङ्के गिरिजापरिणयो नाम षष्ठः सर्गः ॥

---

## ॥ सप्तमः सर्गः ॥

## ॥ कुमारजननम् ॥

श्रीनीलकण्ठः सह शैलभर्तुः पुत्र्या ययौ राजतशैलशृङ्गम् ।
तया ततः सर्वसुखानि भोक्तुं लावण्यवन्त्या वरशीलवत्या ॥१॥

गत्वा गृहं बालमृगाङ्कमौलिर्हर्षाम्बुधिक्षीरनिमज्जनोत्कः ।
भन्ते सदा कष्टपरम्पराणां प्रादुर्भवन्तीह सुखानि नूनम् ॥२॥

देवी तया शङ्करवामपार्श्वे भूत्वा पपौ काममनङ्गसौख्यम् ।
किं सात्विकानां तपसां क्रियाणामीदृक् फलं वास्ति जनस्य लोके ॥३॥

गौरीगिरीशौ नयतः स्म कालं हर्षान्वितौ देवसुखार्थमेव ।
ताभ्यामृतूनामपि वत्सराणां निन्ये शतं चैकमुहूर्तकल्पम् ॥४॥

देवाधिनाथः खलु देवसेनानाथप्रतीक्षानिरतो बभूव ।
वृन्दैः सुराणां विहगैः सहैव क्षीरप्रदं चातकपक्षिवर्गः ॥५॥

कालेन वा देवबरश्चिरेण स्कन्दं न लेभे सुरसैन्यनाथम् ।
आशासु मग्नोऽप्यभवद्यदेवं जन्मास्य मेने मृगतृष्णिका वा ॥६॥

रात्रिचराणां खलु चेष्टितानि स्वाराट् समर्थो न बभूव सोढुम् ।
तस्मादसौ देवजयार्थमग्निं शम्भुं प्रति प्रेषयति स्म साम्बम् ।७॥

स्मृत्वा स्मरं नीलगलेन दग्धं वैश्वानरो भीतिहतश्चकम्पे ।
हेवर्यमादेशवचस्तथापि स्वर्गौकसां सङ्कटनाशमूलम् ॥८॥

शीर्षे तदाज्ञां स वहन् रयेण प्रह्वः प्रणम्य प्रययौ प्रभुं तम् ।
सन्तः सदा सन्ति परस्य कार्ये बद्धादराः स्वार्थे पराङ्मुखा हि ॥९॥

कालेऽर्धराते स तु कालवर्णः पक्षी च भूत्वा शिवमन्दिरस्य ।
वातायनस्थो न विवेद कार्यं मग्नस्थिते शूलिनि सात्मकान्ते ॥१०॥

ज्ञात्वा शिवं सर्वविदं महेशं वह्निर्ययौ तत्र विहङ्गरूपः ।
मन्येऽहमग्निं किल मन्दबुद्धिं प्राप्ते तु दुःखेऽस्ति मतिर्विनष्टा ॥११॥

मग्नस्यमृत्युञ्जयनेत्रजातः कालानलः संनिपपात वह्नौ ।
कालाग्निवह्निर्निखिलं दहन्तं हन्तुं क्षणादारपतानलं तम् ॥१२॥

दृष्ट्वानलं सौख्यहरं हरस्य कोपाग्निपूर्णा दयिता चकाशे ।
घोरं विषं वा भुजगी वमन्ती विस्तारयन्ती च फणामुदग्राम् ॥१३॥

गौरीगिरीशोद्भवकोपतापौ तप्तुं कृशानुं च समारभेताम् ।
तथावनिस्थस्य खगादितस्याप्यासीन्नरस्येव गतिश्च तस्य ॥१४॥

कर्तुं स किञ्चिन्न शशाक वह्निः कोपाग्निशान्त्यै जगदेकपित्रोः ।
भ्रान्तोऽप्यसौ साध्वसकम्पितोरुः पादं स्वशीर्षेण चुचुम्ब रौद्रम् ॥१५

नत्वाथ भक्त्या सुरकार्यसक्तो दोषान्तके रुद्रपदारविन्दे ।
बद्धाञ्जलिर्वन्दुमियेष देवं स्तोत्रप्रियं स्तोत्रकृतेन दाम्ना ॥१६॥

नानास्ति किं त्वं जगदेकबन्धो हेतुं न मेऽत्रागमनस्य सर्वम् ।
किं ते वृथा तापससत्तमास्त्वां सर्वज्ञ सर्वेश इतीरयन्ति ॥१७॥

जाने प्रवेशं समयेऽधुना मे स्वन्मन्दिरेऽसम्यमहापराधम् ।
ज्ञात्वाविशं देव निलिम्पकार्याच्चुद्भ्रान्तरात्मा त्वयि दत्तचेताः ॥१८॥

त्वत्किङ्करोऽहं करुणापयोधे त्रायस्व मां त्वच्छरणागतं च ।
भक्तप्रियं भक्तिपराजितं त्वामाहुः सुरेड्या मुनयः समस्ताः ॥१९॥

कर्तव्य आसीन्न गृहे प्रवेशः आज्ञा प्रभोर्मे च मया सुपालया ।
कोऽपीह शक्तो युगपत्प्रयातुं दिश्युत्तरस्यामपि दक्षिणायाम् ॥२०॥

देवीसहायस्य पुनः पुनस्ते पादारविन्दे प्रणतिं करोमि ।
मृत्युञ्जयाम्भुं जनमद्य रक्षास्यन्नान् तथा मृत्युमुखे प्रविष्टान् ॥२१॥

एकस्त्वमेवासि पतिः पिनाकिन् विश्वस्य चैकोऽसि विश्वविश्वम् ।
त्वत्पुत्रदानेन जगत्सुराणां दुःखं दुरूहं कुरु नामशेषम् ॥२२॥

कैलासवासोऽपि भवान्न वेत्ति किं मर्त्यलोकस्थजनस्थितिं च ।
कार्यस्य सिद्धिर्भवतीति मन्ये काले शुभे मङ्गलदे महेश ॥२३॥

तूष्णीं किमस्माभिरपोह्य कालं स्थातुं हि शक्तिः प्रति सिद्धिकालम् ।
जानाति तं देव भवान् वयं तु जानीमहे नेह कदापि किञ्चित् ॥२४॥

कोपं परित्यज्य महेश मह्यं रक्ष प्रभो मामतिमन्दबुद्धिम् ।
शोकप्लुतं देववरं तथैवेत्युक्त्वा प्रभुं तं विरराम राम ॥२५॥

कर्णामृतं वह्निमुखेन्दुजातं रुद्रप्रकोपोपशमार्थमासीत् ।
सर्वत्र वह्नेः शमने समर्थं जालं कराणामिह शीतलांशोः ॥२६॥

मेनात्मजाकोपकृशानुशान्त्यै स्तवः कृशानोर्न बभूव हेतुः ।
रोमाञ्चिताङ्गी सुखविप्रलब्धा कम्प्राधरा तं तु शशाप रुष्टा ॥२७॥

शान्तात्मकोपः सितरश्मिमौलिः शुक्रं ददौ वीरकुमारहेतुम् ।
दीप्तात्मकोपा च तनूनपाते कुष्ठं ददौ दुष्टहनं भवानी ॥२८॥

शापं वहन् वह्निरसह्यबाधं वीर्यं त्रिलोकप्रलयप्रभावम् ।
दुःखद्वयं सोढुमनीश्वरस्सन्नीशं सुराणां प्रति गच्छति स्म ॥२९॥

वृत्तद्विपे राघव कृष्णवर्त्मा म्लानाननाब्जो निजगाद सर्वम् ।
पश्चाद्ययाचे स्वरुजोपशान्त्यै यार्तस्वरेण प्रतिकर्म किञ्चित् ॥३०॥

सन्तानहीना भवनेति सर्वे शप्ताः सुराः स्वीयसतीषु देव्या ।
शप्ताऽपि भूमिश्च तया बभूव भार्या बहूनां जनपालकानाम् ॥३१॥

दृष्ट्वा महेन्द्रस्तमसह्यरूपं दृष्ट्या कृपार्द्रीकृतया बभाषे ।
मन्दाकिनी शीतलवारिपूर्णा पूर्णं मुदा कारयतीति वह्निम् ॥३२॥

रौद्रेण वीर्येण निपीडिताङ्गो गाङ्गं मनोहारि जलं दधाव ।
कामाग्निदग्धावयवो मनुष्यः कान्तावपुश्चन्दनवारिशीतम् ॥३३॥

भागीरथीशुभ्रजले ममज्ज स्नानं च कृत्वा गतविक्लवोऽभूत् ।
अज्ञानसंवीततमःप्रकाण्डात् स्नानाद्यथा ज्ञानरसाब्धिनीरे ॥३४॥

प्रालेयशीतापि जलं स्वदेहे त्यक्तं कृशानोश्च नदी न सेहे ।
साक्षाद्बलं क्वास्ति जगद्विधातुर्धर्तुं शिरस्यल्पतनोर्हि तस्य ॥३५॥

भानौ प्रचण्डेऽपि गतात्ममातुर्म्लानाननाऽभ्रा नलिनी बभूव ।
कान्ते स्थितेऽपि प्रहता रुजेव कान्त्या बभौ रुद्रबलेन नद्याम् ॥३६॥

यादांसि दग्धानि विनाशमापुर्वीर्यप्रभावेण महेश्वरस्य ।
शेकुस्तथा नापि मनुष्यवर्गाः स्नातुं जले तीरगताश्च गाङ्गे ॥३७॥

नीरं निराकारबलेन तप्तं वायौ निराकारमभूल्लिनीनम् ।
प्रादुर्भवन्तीह तथैव लोके सङ्गादशेषा हि गुणाश्च दोषाः ॥३८॥

स्पर्शेऽपयनम्यापि बभूव शुष्का स्वल्पाम्बुनात्यल्पतनुर्नदी सा ।
चण्डार्कसंपर्कविनष्टतोयाः काले निदाघे सरितो यथान्याः ॥३९॥

वीर्यं कथंचिद्विनिधातुमेषा शक्तेऽपरे तद्धरणे प्रतीक्ष्य ।
गङ्गानयत्कालमिव क्रमेण न्यासादिता न्यासमिवात्मगुप्तम् ॥४०॥

ऊर्जे च मासे दिवसे सपुण्ये षण्मातरस्तीरमवापुरस्याः ।
स्वर्ह्लादिनीदुःखविनाशहेतोः साक्षात्प्रयुक्ता इव शम्भुनैव ॥४१॥

भागीरथीं भाग्यसमुद्रकल्पां कल्लोलशोभां च तनूकृताम्बुम् ।
विष्णोः पदस्थां विमलां नदीनां श्रेष्ठां पुरारातिजटानिवासाम् ॥४२॥

शुभ्रां च शुभ्राभ्रसकाशकायां पापापहां पर्वतराजकन्याम् ।
वक्षोजनोत्तुङ्गपयोधराणां सङ्गाद्भ्रमन्तीं भ्रमरीवृताङ्गाम् ॥४३॥
काशीपुरीवासजनेक्षणानामानन्ददां वञ्जुदलावृताङ्गीम् ।
विश्वेश्वरीं विश्वजनाभिरामां रामोरुकाण्डाश्मजलभ्रमान्ताम् ॥४४॥
सिन्धुप्रियां भास्करजासपत्नीं तां मातरः प्रेक्ष्य सुखं निमङ्क्षुम् ।
चक्रुर्मनांसीश्वरवीर्यसङ्गाद्दुःखामितप्तां न च तां विदित्वा ॥४५॥
पूर्वानुभूतं परमं हि शर्म स्नानाच्च लेभेऽम्बुनि मातृषट्कम् ।
वैश्वानराणां ज्वलतां हि मध्ये निक्षिप्तमात्मानममन्यतोच्चैः ॥४६॥
बहिःप्रभावेण बहिर्गतास्ता नद्या बभूवुर्निमिषेण पश्चात् ।
आस्फोटयामासुरपि प्रभूतमाचुक्रुशुः शुक्परीतदेहाः ॥४७॥
काचिद्विचित्रस्वरयोजनेन प्रोच्चैर्ननादाकुलमानसीषु ।
अन्या पटेनार्धवृतात्मदेहा चित्रं ननर्तेव सवारुणीका ॥४८॥
मातापरा सोढुमनीश्वरा तं रक्तेक्षणा वीर्यबलेन विद्धा ।
दन्तैर्ददंशौष्ठपुटाधरं स्वं कारुण्यवाचा विललाप भूयः ॥४९॥
अन्या प्रसूः स्वीयशिरोरुहाणां वृन्दं विकीर्याभरणानि तीरे ।
गाङ्गे तदाभूत् पुनरेव भर्तुं नैव प्रभुः केवलमग्नितप्ता ॥५०॥
केचिच्चतुर्थाद्विजराजमौलिं चित्तस्थितं चिन्तयतः स्म भूयः ।
प्रायो जनानामशिवे तु लब्धे काले शिवः शोकहरः प्रमाणम् ॥५१॥
इत्थं विषादाकुलमानसीनां तासामवापेशबलं तु गर्भम् ।
बीजं यथा वृद्धिमविन्दतासां भीतिस्तया चित्तगृहं विवेश ॥५२॥

गर्भं भिया मोघमनन्तरं ताः प्रत्यन्तशैले विनिवेश्य जग्मुः ।
स्नाश्च पोढा विधृतस्य सद्यो दिव्याकृतिं प्राप किल क्रमेण ॥५३॥

सर्वा क्षितिः काञ्चनसन्निभाभूत् श्रीकण्ठवीर्येण सितेन पूर्णा ।
हैमा बभूवुस्तृणवृक्षशैलाः सर्वे तदुर्वीतलबद्धमूलाः ॥५४॥

गाङ्गेयनाम्नापि च जातरूपप्रत्यङ्कितेन प्रथितं सुवर्णम् ।
यन्त्राङ्गनिर्माणकृतावयासन्नन्यानि लोहानि गिरौ बहूनि ॥५५॥

निक्षिप्तवीमा वसुधा विरेजे विद्युत्प्रदीपालिरिवैकदेशे ।
पङ्क्तिर्हि भासामिव भास्करस्य वह्निस्वयस्येव च रश्मिरेखा ॥५६॥

दिव्याकृतिः षट्सु दिनेषु जातः शैले तदीये शिशवः षडास्यः ।
बालो रुदन् बाणवने शयानो देवांश्च तत्राह्वयतीव दृष्टः ॥५७॥

रुद्रास्यपद्माणि मुखानि सम्यक् बालस्य बालार्कनिभानि तत्र ।
दृष्ट्वा वने जातममुं वनस्थाः षट्कं शिशूनामिति मन्वते स्म ॥५८॥

तीर्थैश्च काशे स्वपितुः पिता मे भूयोऽधिकैः पञ्चशिराः स्वकीयैः ।
सोऽन्वय षड्भिश्च जितः पितेत्थं बालो हसेदेव वने मिनान्तम् ॥५९

देवार्पिताऽस्ता रघुनन्दनेन स्कन्दं निजस्तन्यरसप्रदानात् ।
संपोषयामासुरतः स बालो नाम्ना श्रुतोऽभूदिति कार्तिकेयः ॥६०

निरस्तपातः स तु बाहुलेयो जग्राह दुग्धं किल कृत्तिकाभ्यः ।
यस्मादमुष्मोऽपि षडाननस्याः पञ्चाननास्तत्र बभूवुरस्य ॥६१॥

अयं शिशुर्मे न तवेह स्यान्नयोर्भ्यं च गङ्गा स्वनतो मनन्यः ।
चक्रुर्विवादं गिरिजागिरीशावागच्छतां तत्र विमानमार्गे ॥६२॥

दृष्ट्वा[१] शिशुं [illegible] नगराजकन्या प्रह्लादविस्मेरमना बभाषे ।
श्रीकण्ठवामाङ्कतले निषण्णा हस्ताम्बुजामृष्टकपोलकान्तिः ॥६३॥

वीक्ष्यार्भकं बालकुरङ्गनेत्रं दन्तश्रिया धिक्कृतनारिकेलम् ।
जम्बूफलप्रख्यशिरोरुहं च स्वामिन् सुरेशप्रणताङ्घ्रिपीठम् ॥६४॥

गम्भीरवक्त्राम्भमिमं कुमारं षण्मासनीकाशमकाममीश ।
सान्द्रप्रमोदा प्रबलाद्भवामि त्वज्ज्ञातबान्धव्यबलाभिभूता ॥६५॥

आकस्मिकः कोऽपि कुमारकेऽस्मिन् स्नेहः प्रभो मय्यधुनैव जातः
आविष्करोतीति विचिन्तयामि प्रसक्तबान्धव्यमनेन सार्धम् ॥६६॥

नान्वस्यमानं जगतीतलेऽस्मिन् जाम्बूनदाभं जितमन्मथं च ।
जानामि जातं जगदेकबन्धो जन्याय जम्भारिजयप्रदाय ॥६७॥

अज्ञातबन्धुः शिशुरेष बन्धो कः कथ्यतां मे दयया दयाब्धे ।
मातास्य का भाग्यवतीषु धुर्या येनं समीक्ष्यातिमुदं समेति ॥६८॥

पिता जगन्नाथ ममापि नाथ ह्यमुष्य को ब्रूहि यथात्तमेव ।
स किं सुराणामुत किन्नराणां क्षितिप्रभूणां भवति प्रभुर्वा । ६९॥

हसन् भवो हैमवतीमुवाच त्वया विना कास्य भवानि माता ।
पितापि कान्तेऽकथितो मयाद्य त्वया किल ज्ञात इतीह मन्ये ॥७०॥

अङ्कण्यमीशानशिशुं तनूना शैलेशितुः शौलतले शयानम् ।
शातोदरी शातयुतातिशीघ्रं समग्रहीत् पाणिसरोरुहाभ्याम् ॥७१॥

मुदितवदनलक्ष्मीर्मेनकानन्दिनी सा
शिशुवरमचलाभ्यां लोचनाभ्यां पिबन्ती ।
पतिनिकटमनैषीच्छीघ्रगत्या हसन्तं
प्रणतिमपि सुराणां मानयन्ती न तत्र ॥७२॥

स्तुतितिमपि चक्षुर्गोचरं गोत्रशत्रोः
सुरगुरुमपि सर्वानागतान्नैव चक्रे ।
अमवदथ शिशोस्सा संभ्रमेण स्वकार्ये
विमुखहृदयवृत्तिः सर्वदैवं मनन्यः ॥७३॥

रजतगिरिगृहं तं बालकं शैलबाला-
ऽप्यनयदथ सकान्ता बाललीलाभिरस्य ।
प्रमदभरितचित्ता वत्सला लालयन्ती
समयमनयदद्वौ केवलं वा मुहूर्तम् ॥७४॥

उमाकान्त पुत्रं दशशतकराभं सुरमुदे
मुदा दत्वा जिष्णोर्जगदधिकपीडाकरमलम् ।
निहन्तुं सेनायाः पतिपदममुष्मै वितरत
प्रभुं तं देवानामवददमलश्रीरिति विभुः ॥७५॥

---

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥
॥ इति श्रीसीतास्वयंवरे महाकाव्ये श्यङ्के ॥
॥ कुमारजननं नाम ॥
॥ सप्तमः सर्गः ॥

## ॥ अष्टमः सर्गः ॥

## ॥ सगरोदन्तः ॥

श्रीरामः श्रुतियुगसंपुटेन पीत्वा
पीयूषं विविधकथारसाभिमिश्रम् ।
उद्भूतं मुनिवरचारुवक्त्रबिम्बा-
त्सज्ज्ञोऽभूत्सगरकथासुधां च पातुम् ॥१॥

साकेते सगरनृपः शशास पूर्वं
सारज्ञः सकलकलागमाम्बुधीनाम् ।
विद्यानां निधिरपि तापसाग्रणीस्तं
प्रारेभे कथयितुमित्यथेन्दुवक्त्रम् ॥२॥

विप्राणां सुहृदथ वेदपारगाणां
भूपानां नतशिरसां प्रभुः स साक्षात् ।
पौराणामभवदनन्तसौख्यदाता
क्रूरारिः सकलकलङ्ककारणानाम् ॥३॥

गाम्भीर्ये नदपतिसन्निभः स राजा
सम्पत्तौ विजितकुबेरभाग्यवृन्दः ।
शौर्ये च त्रिदशवरेण संस्तुतोऽभू-
द्वीर्ये चाप्यरिरमणीक्षणाश्रुहेतुः ॥४॥

दण्ड्यानां यम इव सार्यदण्डधारी
साधूनां विनयवतां प्रसाददाता ।
दूतेषु प्रभुर्घृणी क्वचिन्न चासीद्
दारिद्र्यादतिकृपणान् ररक्ष मर्त्यान् ॥५॥

शत्रुघ्नः श्रुतिनिकटप्रसारिताक्षो
राजासावपि न च नेत्रयुग्मभाजः ।
चाराक्षो निखिलभुवं शशास धीमां-
स्तेनाभूत्त्रिनयनसन्निभः स साक्षात् ॥६॥

सुन्दर्यः स्वपतिपरायणा बभूवुः
स्वाचारे सततमतन्द्रिताः प्रशान्ताः ।
वर्णानामभवदसङ्करं कुमार
सर्वत्र प्रमदभरो हि दृश्यते स्म ॥७॥

पर्जन्यः शुभसमयेऽभिवर्षति स्म
स्तेनेभ्यः किल न बभूव लोकपीडा ।
सर्वेषामभवदनश्वरशान्तिसौख्यं
काकुत्स्थे भुवमधिशासति प्रवीणे ॥८॥

गीर्देवी कविरसनातले ननर्त
श्रीदेवी पुरवनिताननाम्बुजेषु ।
रुद्राणी नृपनिटिलभ्रुवोस्तथैवं
राजेन्द्रे पुरमधिशासति स्वकीयम् ॥९॥

नाकाले भवति कदापि कस्य मृत्यु-
र्दुर्व्याधा जननिचयेऽभवन्न दृष्टा ।
क्षुत्रापि प्रभुवरशासिताः प्रजास्ता-
स्तृप्तिस्था कमपि ययाचिरे न तत्र ॥१०॥

मन्वादिप्रभृतिभिरुत्तमैर्नरेन्द्रै-
रूढां तां वहति धुरं धरारमण्याः ।
धर्मज्ञे सति न विवेश वाप्यधर्म-
श्चोर्वी सा बहु शुशुभे वधूर्नवेव ॥११॥

वैधव्यं पुरवनिताः कदापि दुःखं
नाजानन् सगरनृपालपालितास्ताः ।
पुत्राणां मरणशुचाथवा प्रदग्धा
नैवासन् सकृदपि धर्मकर्मबद्धाः ॥१२॥

एतावत्सगरमहीपतिः प्रशासद्
भूतीनां नगरजनस्य सोऽपि हेतुः ।
धर्मज्ञोऽप्यघरहितोऽपि शीलपूर्णो
न प्रापात्मजमुखदर्शनं सुखं तु ॥१३॥

प्रासादः शिशुवरलीलया विहीनः
संयुक्तोऽप्यतिरुचिराभिरङ्गनाभिः ।
ताराभिर्मणिरुचिराभिरात्तकान्ति-
र्निर्ज्योत्स्नो घनतल इव व्यराजतास्य ॥१४॥

द्वे भार्ये सगरनृपस्य शीलवत्यौ
वैदर्भी रघुवर केशिनी किलैका ।
आह्वा सुमतिरभूदिति प्रियान्या
चैताभ्यां सह मुदितोऽभवन्नरेन्द्रः ॥१५॥

वर्षाणामयुतमनेन नीतमात्रं
आनन्दी न तु सुतदर्शनाद्बभूव ।
पापानां फलमिति पूर्वजन्मजानां
मेनेऽपाथय यतते स्म तत्क्षयार्थम् ॥१६॥

तत्तापं नृपतिरनीश्वरश्च सोढुं
पत्नीभ्यां सह गहनं ययौ स धीमान् ।
पापानां निचयमहं पुराकृतानां
दग्ध्वा तत्तपसि सुतं सुखं च लप्स्ये ॥१७॥

इत्थं स्वे मनसि विभाव्य भूमिपालो
गुप्त्यर्थं सचिववरे निवेश्य राज्यम् ।
चन्द्रार्कप्रतिममुखः स्वभावतोऽसौ
शैलेन्द्रं प्रति तपसे जगाम शीघ्रम् ॥१८॥

पत्नीभ्यां सह स तपश्चरन् विरेजे
चीरालङ्कृतनिजविग्रहो नरेन्द्रः ।
प्रत्यक्षः शिव इव शैलकन्यकाभ्यां
मातङ्गाजिनपरिभूषितात्मकायः ॥१९॥

पूर्वस्मिन् जनुषि कृतेऽश्वमेधसङ्घे
पुन्यत्ताविह निहते तपोऽर्कतापात् ।
प्रीतान्तो भृगुरथ यच्छति स्म तस्मै
भूभर्त्रे वरयुगलं रमापहर्तुः ॥२०॥

भारत्या सुविशदया दयासमुद्रो
राजानं गिरिविषये भृगुर्जगाद ।
एकस्ते भवति किलैकया तनूजः
सूतेऽन्या दशशतषष्टिसूनुवृन्दम् ॥२१॥

प्रीतोऽहं तव तपसा वरेण राजन्
स्वस्थः सन् व्रज नगरीमितः सहाभ्याम् ।
अङ्के स्वे मुदितमनाः सुतं निवेश्य
भूयास्त्वं पुलकितगात्र एव तेन ॥२२॥

कर्तारं तव कुलसंपदः समृद्धे-
स्त्वद्बाह्वोरपि च चिरं निपीड्य पश्चात् ।
तद्गण्डे नवनवनीतसन्निभेऽस्य
स्पृष्ट्वा त्वं ललसि च लालनैः सुतानाम् ॥२३॥

श्रुत्वा तां गिरमथ केशिनीसुमत्यौ
भक्त्या तत्पदयुगले निवेश्य शीर्षे ।
का माता भवति कुलस्य वृद्धिकर्तुः
का चान्या वद दययेति चोचतुस्तम् ॥२४॥

देवर्षिः सुतवरणाय ते अदिक्ष-
  द्वैदर्भी कुलकरपुत्रमेव चक्रे ।
धर्मज्ञा सुमतिरभूच्च रामभार्या
  राजेन्द्रोद्दशशतषष्टिसूनुमाता ॥२५॥

रामाख्यं पुनरपि पत्तनागतं तं
  निध्यातुं सकलजनाः पुरीं प्रणीय ।
नानालंकरणमनोरमां रमां वा
  पामरमुर्नयनपुटैः पपुश्च भक्त्या ॥२६॥

भूपार्को निकटमगाद्यदा नगर्या-
  वाद्यानामसकृदभूच्च भूयमणादः ।
संप्रापुर्युगपदथाखिलाः प्रजास्ताः
  कर्णानां मुदमपि लोचनाम्बुजानाम् ॥२७॥

मान्यानन्वयगुरुपीश्वरो जनानां
  पूर्वार्द्रे स्थितमथ मस्तकेन नम्र ।
अन्येषामपि रघुनाथ पूत्रुराणां
  पादेषु प्रणतशिराः क्रमेण चासीत् ॥२८॥

भूपीन्द्रः स्वकु करुणापरेन कांश्चित
  कांश्चिद्वा मधुरवचोभिरन्यमन्यान् ।
सप्रेमेक्षणयुगलादमन्युरेन
  शीर्षस्योपजनविधानकर्मणान्यान् ॥२९॥

तत्रस्थानखिलजनांस्तथैव वृद्धान्
सम्मान्यावनिपतिवृन्दवन्द्यपादः ।
संयुक्तः शुभकरमण्डनैरनेकै-
रासौ स्वरथमगात्सुखेन सौधम् ॥२०॥

रथ्यानामुपवनतलेषु लोचने स्वे
प्रस्तीर्य प्रभुरप गोचरीचकार ।
लोकानां कृतिभिरमूल्यभक्तिभावं
साक्षात्तं पितरमिवास्तुवन् कुमार ॥२१॥

हर्म्याणामुपरि ददर्श दर्शनीयं
साकेतध्वजपटमाशुगावधून्तम् ।
सोऽप्यासीदिव पुरभेदनाधिदेवताः
सन्तोषप्रकटनकर्मतत्परश्च ॥२२॥

नीतोऽसौ श्रुतिरमणीयतूर्यघोषै-
स्तत्सौधं प्रति नृपतिर्जनैः स्वकीयैः ।
मध्याह्ने विविदनैकसत्क्रियाश्च
स्वीयान्तःपुरमविशत्समाप्य सर्वाः ॥२३॥

प्राप्ते ते सगरनृपस्य पूर्णकाले
प्रेयस्यौ तनुजशतानि दधत्यौ ।
एका सा तनुजमसूत वंशवृद्धेः
पुत्राणां षडयुतमेव तत्सपत्नी ॥२४॥

काकुत्स्थामवदथ सर्वपुत्रवृन्दं
संप्रापत्तनुभवमात्तदिव्यधाम ।
विज्ञाताखिलनिगमागमादिविद्यं
सुप्रीतप्रभुसुतमुज्ज्वलं गुणौघैः ॥१५॥

काकुत्स्थः स कुलकरः सुतोऽतिमात्रं
साकेतावसथनरानपीडयच्च ।
प्रख्यातोऽप्यसमञ्ज इत्यतीव
क्ष्माभारो भुवि विचचार राक्षसाभः ॥१६॥

क्ष्मापालः स तु सुतदुष्टचेष्टितेन
दीनानां नगरनृणां निशम्य वार्ताम् ।
संक्लिष्टोऽगमयदमुं बहिर्नगर्याः
दोषह्नि रिपुरिति बध्यते कुपुत्रः ॥१७॥

यज्ञेन प्रथितयशामिहैव दोग्धुं
निःश्रेयस्याखिलनृपचक्रमाजुहाव ।
तेजोभिर्निजतनुजैः सहस्रसंख्यैः
संपूर्णः स इव रराज लोकबन्धुः ॥१८॥

पानीयोद्भवतनुजेन पण्डितेन
स्वादिष्टोऽध्वरवरमश्वमेधमेव ।
नृपालो विमलमनाः स सत्त्ववृत्तिः
प्रारेभे जयदमनल्पकीर्तिदं च ॥१९॥

सुत्रामा तदनु निशम्य भूमिलोके
कर्तारं निजपदनाशकारणस्य ।
यागस्य द्रुततरमागतो मुमोष
तस्याश्वं प्रभुरपि स स्वकार्यमग्नः ॥४०॥

पातालं कपिलमहामुनेः पुरस्ताद्
यागाश्वं नयति रयात्पुरन्दरः स्म ।
कार्याणामभिमतमीक्षते स्म चोत्कः
स्वस्थान्तस्तदनु वसुन्धराधवस्य ॥४१॥

यज्ञाश्वानयनकृतत्वरान् कुमारान्
मारामान् मनुजपतिः सहस्रषष्टिम् ।
आमन्त्र्यावनिखननाय ते तथैवं
निर्दिष्टा भुवमखिलामकम्पयन्त ॥४२॥

पश्चात्ते भुवमखनन् भुवि प्रवीरा-
स्ताताज्ञां शिरसि सगौरवं वहन्तः ।
निःस्वानः प्रभवति तेन भीतिदः स्म
क्ष्मादेवी पृथुतरबाधया चकम्पे ॥४३॥

पातालं प्रति ययुरुग्रवेगयुक्ता
वीरास्ते बहुविधलोहकानि दृष्ट्वा ।
भूगर्भे विविधमनोज्ञवस्तुपूर्णे
संशोध्यापि च तुरगं तु लेभिरे न ॥४४॥

रत्नानां निचयमनेकधातुपङ्क्तिं
लोहानामपि च ददर्श भूरि राशिम् ।
सर्पाणां विषभरितास्यसंयुतानां
वृन्दं वा सगरनृपात्मजवृन्दम् ॥ ४५ ॥

विस्तीर्णं गगननिभं नृपात्मजाता-
श्चक्रुस्तेऽश्टमथ भूरिनिम्नगर्भम् ।
चन्द्रास्यापत्सुदधि स एव पूर्णो
नीरन्ध्रैर्निभवलैस्तु दत्तजन्मा ॥ ४६ ॥



नागेन्द्रं ददृशुरथावनीधरं त-
न्नागेन्द्रोपमबलशालिनः कुमाराः ।
नागेन्द्रानपि च करालदन्तयुक्ता-
न्नागेन्द्रोपमहयमश्वयज्ञियं तम् ॥ ४७ ॥

मार्तण्डः स्वकुलकरान् करान् स्वकीया-
न्पाताले गमयति स स्म चैककाले ।
पुत्राणां सगरनृपस्य नागलोके
कार्येण प्रथममपश्यदुद्धतेन ॥ ४८ ॥

कोपेद्धास्तदनु दिनाधिपान्वयाये
सञ्जातास्तुरगमवीक्ष्य तेन शीघ्रम् ।
तीक्ष्णाग्रैर्भुवमखनन् पुनः पुनस्ते
खड्गैश्चानुपमनखैर्दृपद्भिरग्रैः ॥ ४९ ॥

पार्श्वस्थः कपिलमहामुनेश्च तेषां
दृङ्मार्गे तुरगवरः स्थितो बभूव ।
यज्ञाश्वप्रथमसुदर्शनेन हृष्टा
निःश्वासं मुमुचुरथ श्रमान्तचिह्नम् ॥ ९० ॥

धीमन्तः सगरनृपात्मजाः समापुः
तत्काले सदृशफलं कुमार तत्र ।
सर्वेषामिह किल कर्मणां कलापः
स्वारब्धः फलमनुयच्छतीति मन्ये ॥ ९१ ॥

पुत्राणां त्रिशतशतद्वयं तदानीं
घोरं तं मनसि विभाव्य तापसेन्द्रम् ।
साक्षाद्वा परमपुमांसमप्यनन्तं
खड्गेन प्रति च दधाव हन्तुमेनम् ॥ ९२ ॥

सर्वज्ञः स हि निधनं विभाव्य तेषां
रोषाग्निं नयनयुगात्ससर्ज तेन ।
दग्धास्ते द्रुतमथ भस्मसाद्बभूवु-
श्चैकेन क्षणसमयेन दुष्टचर्याः ॥ ९३ ॥

पुत्राणां गतिमथ दीक्षितो नृपालो
न श्रुत्वा तुरगगवेषणोद्गतानाम् ।
चिन्तार्तो निजतनुजोद्भवं दिदेश
प्रख्यातं विनयनतं गवेषणार्थम् ॥ ९४ ॥

गच्छाद्य प्रति तुरगं सुतात्मजात
सास्त्रौघो निजतनुरक्षणार्थमेव।
मार्गे ते प्रणम शुभांश्च पूजनार्हान्
हिंस्राणां भव भव एव कालरूपः ॥ ९५ ॥

नत्वासावथ शिशुजः पितामहाज्ञां
धृत्वा तां शिरसि पितृव्यविक्रमेण।
प्रारब्धेऽध्वनि स जगाम तानथाश्वं
चान्वेष्टुं मरुज्जवरूपिणीमथैनः ॥ ९६ ॥

दिङ्नागानपि बलसंयुतान् स नत्वा
पप्रच्छ क्रतुतुरगं पितृव्यवृन्दम्।
ते सर्वे विनयिनमाहुरेनमार्तं
पथ्यानां ननु विशदा पुरोऽस्ति सूची ॥ ९७ ॥

मार्गेऽसौ निजगुरुदर्शनार्थमेवं
गच्छन् स्वे हृदि विषमाद् तापदग्धः।
दुश्चिह्नं शकुनचयं च वीक्ष्य बालो
दुःखानां भुवि निचयो हि सूच्यतेऽयम् ॥ ९८ ॥

दुःखार्तो विविधहयधैर्यवीर्यो
बन्धूनां निवहमथाभिदूषितं च।
संप्रेक्ष्याचिरसमयात्स्वयं तथा वा
शोकाग्निं प्रविशति तत्र बालकः सः ॥ ९९ ॥

मुक्त्वाक्ष्णोः सलिलमनल्पशोकदग्धो
नैवापं विधिवदथाम्बु दातुमेव ।
सन्नद्धोऽपत्रदहिशत्रुराययौ तं
काकुत्स्थं प्रशमितदुःखमेव कर्तुम् ॥ १० ॥

धीमन् मे शृणु वचनं रुजं च मा गा
दायादास्तव वशमासवन्त एते ।
कालस्याखिललयकारणस्य बाल
ज्ञातं ते प्रलयकरो भुवीति कालः ॥ ११ ॥

बन्धूनां निरुपमविक्रमोद्धतानां
कार्यैस्ते निखिलमगन्निषूदनाद्यैः ।
भीतास्तास्तनय नृपस्य नाकपाद्या
गीर्वाणाः शरणमगुश्च सृष्टिहेतुम् ॥ १२ ॥

सोऽप्येवं मघवमुखैः सुरैः स्तुतोऽथ
स्वालोच्य स्वहृदि महाबलाभिपूर्णान् ।
एतांस्ते गुरुसहजानरं विदित्वा
मृत्योर्वा वशमनयन्नयानयज्ञः ॥ १३ ॥

लीलैषा सकलजगत्प्रभोरनन्ता
जन्तूनां विधिलिखितानुसारि भाग्यम् ।
प्राज्ञेन प्रभुवरपौत्र नैव शोच्यं
मूढोऽसौ य इह कुमार निन्दतीशम् ॥ १४ ॥

तस त्वं रविकुलकीर्तिदाशु गत्वा
सार्धं ते तुरगवरेण राट्समीपम् ।
आश्वास्य क्रतुतुरगात्तमेव भूपं
संदग्धान् कुरु निजबान्धवान्विमुक्तान् ॥ ६५ ॥

श्रुत्वासौ विहगवरोक्तवाक्यपङ्क्तिं
काकुत्स्थः कथमपि सैन्धवं गृहीत्वा ।
राजेन्द्रं प्रति च जगाम शोकतप्त-
श्चक्रे वा तमपि सहस्रशो रुजार्तम् ॥ ६६ ॥

कथमपि हृदि धृत्वा पुत्रशोकं महीपो
हृदयदलनशीलं भूमिलोके जनानाम् ।
क्रतुवरमपि साङ्गं पूरयित्वा यथार्हं
ह्यमिळपति च भुक्तिं स्वर्गलोके स वासम् ॥ ६७ ॥

मार्तण्डान्वयसंभवो नरपतिर्यज्ञावसाने ततो
राज्यश्रीपरिवर्धितात्मविभवो राज्यं प्रशास्याल्छुम् ।
पौत्रे राजसमानतेजसि धुरं भूमेर्निवेश्यानघा
स्वर्लोकं स जगाम कीर्तिधवलस्तत्रानुभोक्तुं सुखम् ॥६८॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

इति श्रीसीतास्वयंवरे महाकाव्ये अयङ्के
सगरोदन्तो नाम
॥ अष्टमः सर्गः ॥

श्रीः

॥ नवमः सर्गः ॥

## ॥ गङ्गावतरणम् ॥

अंशुमानथ गते नृपसूर्येऽप्यंशुमलिनि यथा चरमाद्रिम् ।
अंशुमानिव शशी व्रजति स्म प्राच्यशैलशिखरं हरिपीठम् ॥ १ ॥

क्षीणकान्तिनिवहा रिपुभूपा मग्नजा इव सति प्रभुसूर्ये ।
अस्तमस्य हि निशम्य सहर्षाः प्रोदिताः सपमवह्निनकान्त्या ॥२॥

किन्तु तत्क्षणयुते समयेऽसौ राममानविभवो निजशक्त्या ।
सागरोद्धृततनुः परिपूर्णस्तारकेश इव तान्निजवाम ॥ ३ ॥

सागरस्य तनुजः स्वपितॄणां मुक्तिमेव विमलामथ दातुम् ।
स्वर्णदीमलमथानयनार्थं चिन्तयाकुलमनाः बभूव ॥ ४ ॥

चिन्तया किमु भवन्ति हि लोके मानवस्य सफलाः कृतिसङ्घाः ।
भावयापि यशसा परिपूर्णं सोद्यमं च कृतिनं नरमेव ॥ ५ ॥

धैर्ययुक्तमनसा गुरुकार्यं कर्तुमेव मनुजः प्रयतेत ।
तद्धि प्रभुवशे प्रणिधाय तत्फलं हि न कदाप्युपलिप्सु ॥ ६ ॥

सन्ति राम मनुजा द्विविधा हि क्ष्मातले विविधशीलयुतेऽस्मिन् ।
सोद्यमस्तु लभते फलमेकश्चिन्तयास्ति निहतः किल चान्यः ॥ ७

चिन्तयेह पुरुषः सुखरिक्तश्चिन्तयैव लभते दुरवस्थाम् ।
तत्सदा मतिमता न च कार्या पूरुषेण धृतिघातकचिन्ता ॥ ८ ॥

श्रीधृतिप्रभृतिभिर्गुणरत्नैः प्रस्तुतां गुरुकृतिं विचरेव ।
यद्यसौ न विजयी समयान्ते तर्हि दोषमरणे न विनिन्द्यः ॥९॥

याचकाः खलु वयं जिनशत्रो सन्निवौ त्रिभुवनावनकर्तुः ।
योग्यतानुसरणात्स ददाति प्रार्थनाश्च सकला न कदापि ॥१०॥

भव्यमेव भगवान् स ददाति ह्यर्थिने जगति जाग्रत एव ।
तत्कचित्तु सुसुखं रमणीयं दुःखपूरितमथ कचिदस्ति ॥११॥

अंशुमानिति नृपः कुशलोऽपि स्वर्णदीमथ भुवं प्रतिनेतुम् ।
ईश्वरस्तु न बभूव दिलीपं राज्यदीपमकरोद्दिवमैत् ॥१२॥

सोऽपि राघव गिरीन्द्रतनूजाशुभ्रतीर्थपरिपूतशरीरान् ।
आत्मनः पितृगणांश्च विधातुं चिन्तयाहतमना न शशाक ॥१३॥

चिन्तयैव समयं नयतोऽस्य प्रादुरास तनयस्तपनाभः ।
तं भगीरथ इति प्रथिताख्यालङ्कृतं नरपतिः स चकार ॥१४॥

बालभास्कर इव प्रभुसूनुर्वृद्धिमाप नृपतेः पुर एव ।
कर्मणार्जितपुरन्दरलोको राज्यपालमकरोत्समये तम् ॥१५॥

सर्वदा निजजनेष्वभिरक्तो राजवन्द्यचरणः स नृपालः ।
सन्ततिं न लभते स्म चिरेणाप्येधते न परिपीडितचेताः ॥१६॥

आत्मनः पितृपितामहवृन्दं देवलोकगमनोन्मुखमेव ।
देवसिन्धुसलिलेन चिकीर्षुः पर्वतं प्रति ययौ हिमवन्तम् ॥१७॥

नद्धपाणियुगलो नरपालो वायुभक्षणरतश्च विधातुः ।
प्रीणनाय यतो तपति स्म प्राप्तुमात्ममनसि स्थितवाञ्छाम् ॥१८॥

श्मश्रुसंवृतमुखः सजटः सन् ब्रह्मसूत्रपरिभूषितवक्षाः ।
ऊर्ध्वबाहुरमलो नियमैर्वा मीलिताक्षियुगलः स बभूव ॥१९॥
शिशिरवर्षरचिता शिवमूर्तिश्चित्रकारलिखितेव तथा वा ।
निश्चलः समधिगम्य समाधिं राजते स गिरिराजिषु राजा ॥२०॥
निश्चलं वनमुपङ्गमलोको लोकपालसमम्रं निचखञ्च ।
पक्षिणोऽपि विविधा हि रमन्तः क्रीडयाविहरदुस्तरुमावात् ॥२१॥
सिंहगर्जनशतादपि राजा ध्यानतश्च न चचाल स किंचित् ।
निर्जितेन्द्रियगणस्य नरस्य प्रायशो भवति लक्षणमित्थम् ॥२२॥
हायनानि स निनाय नृपेन्द्रो राघवो दशशतं विधिनैवम् ।
तत्तपःप्रमुदितश्चतुरास्यस्तिष्ठति स पुरतः सह देवैः ॥२३॥
वागधीशमुखनिर्गतवाणी मञ्जुला नृपमबोधयदेनम् ।
पर्वतेश्वतलनिस्सृतनीरा जाह्नवीव तटिनी स्वनवद्रून् ॥२४॥
किं स्थितोऽसि तपसीदृशि राजन् किं तवाभिलषितं कथयाशु ।
भूपते नरवरामपि दातुर्दीयते किमु तवापि हि किंचित् ॥२५॥
एवमादिगदितश्चतुरेण ब्रह्मणा सितमुखो वसुधेशः ।
भक्तिसन्नतशिराः स बभाषे तं शुभार्थयुतया गिनवाण्या ॥२६॥
अस्मदीयपितरः किल पूर्वं भस्मसात्तु विहिताः कपिलेन ।
सद्गतिं च सदृशीमधुनापि प्राप्तुमप्सु विधिना न समर्थाः ॥२७॥
भस्म तद्रविकुलोद्भवभूपाः पूर्वजा मम पराक्रमपूर्णाः ।
देवसिन्धुजलसङ्गमपूतं नेश्वराः कमलसंभव कर्तुम् ॥२८॥

मानवस्य मरणादनु तीर्थे दग्धदेहजनितं भसितं तत् ।
सर्वथा ननु निमज्जयितव्यं चैतदेव विदितं भवतोऽपि ॥२९॥

वत्सरा दशशतं हि विरिञ्चे व्यर्थमेव न गता इति मन्ये ।
मामकः पितृचयो भवदीयप्रेक्षणेन लभतामिह मुक्तिम् ॥३०॥

एकदा त्रिपथगासलिलौघे त्वत्कृपाजलनिधौ च पितॄणाम् ।
विन्दतां भसितमम्बुजयोने मज्जनात्परमपावनरूपम् ॥३१॥

आत्मजं भुवि विना न लभे शं नास्ति मेऽपि सुगतिः परलोके ।
तद्दशापरवशो वशिनं मां शर्मणः परवशं ननु देव ॥३२॥

पुत्र एव निरयात्स्वगुरोरात्त्रातुमात्मकुलमान् हि समर्थः ।
पापकर्महरणाय तपो मे चास्तु दुःखतरणाय विशतः ॥३३॥

बालभाषितमहं श्रवणाभ्यां सन्निशम्य नमभेव न कन्तुम् ।
लोकनाथमहमद्य भवन्तं प्रार्थये मम सुतोदयहेतोः ॥३४॥

आत्मजेन गुणिनैव लभेऽहं संमदं न विगुणैरपि पुत्रैः ।
तद्भवान् गुणिनमुत्तमपुत्रं वंशकीर्तिकरमेव ददातु ॥३५॥

मा भवान् मम पितामह पुत्रं सागरेण सदृशं प्रददातु ।
तादृशादपि वरा सुतजाधादपमहिषनिरितीव हि मन्ये ॥३६॥

सा प्रिया समधिगत्य च तापं सिद्यतेऽतिविमुखा सुखवृन्दे ।
पुत्रजन्म न चिरादपि लब्ध्वा मातृलोकसुखदं रमणीयम् ॥३७॥

भामिनी च मम मानमहंसी सैव दुःखविधुरा क्षयमेति ।
तत्स्तनंधयवरं मम दत्वा तत्स्तनं कुरु पयःपरिपूर्णम् ॥३८॥

राजकीयकृतिजश्रममेव म्लेच्छितैः शिशुमुखात्क्षणकालम् ।
किंचिदूनमिह कर्तुमनन्यो याचनां तव पुरः किल कुर्वे ॥३९॥

त्वत्कृपारसगुणादुदितश्रि श्रीमदस्तु भगवन् सुतमूलम् ।
तद्विघातकरणानि निमेषाद्विश्वसृच्छलमतां च लमन्तां ॥४०॥

राजनीतिकुशले वनमध्ये राजनीति भणति द्रुहिणस्तु ।
सुप्रसन्नवदनो वरपुत्रं केवलं किल ददावथ तस्मै ॥४१॥

पद्मजः सुरधुनीमभिनेतुं निर्दिदेश निरयात्पितृवृन्दम् ।
रक्षितुं सुमनरक्षणशीलं विश्वरक्षणपरं प्रति तन्तुम् ॥४२॥

तं दिलीपतनुजः सहसैवं पद्मयोनिगदितं प्रतिमान्य ।
प्रीणनाय गिरिशस्य जितारिर्विद्धपाणिरभवन्नतशीर्षः ॥४३॥

विश्वतापदतपःपरितापाद्विश्वपालनविभुः परितुष्टः ।
दर्शनं स भगवान् सुभगाय प्रीतिपूरितमनाः प्रददौ स्वम् ॥४४॥

स्वर्णदी तु बहुधा बहुवेगाद्व्योमतश्च निपपात नगाग्रा ।
उद्यता त्रिभुवनैकमहेशं रुद्रदेवमपि सैव विजेतुम् ॥४५॥

मां विनेह सुगतिर्न हि लोके केवलं हि शरणं सकलानाम् ।
प्राणिनामहमतो न पतामि क्ष्मातले किमु जनस्तु करोति ॥४६॥

मामितो गमयितु न समर्थः सृष्टिहेतुरपि नीरजजातः ।
नास्ति मत्समभिहेति च सिन्धुर्गर्विता समभवद्भवरातुः ॥४७॥

इत्यमाद्रि मनसि प्रविचिन्त्य स्वर्गसिन्धुरपतद्रभसेन ।
[illegible] जिगमि प्रगिता सा दिक्तटान् स्वनिनदैरथ भित्वा ॥४८॥

इन्द्रमुख्यसुरसत्कृतपादा ब्रह्मणापि विहितस्तुतिसङ्घा ।
अम्बरोपरि निशं परिसेव्या विष्णुपादनिलया गगनस्था ॥४९॥

किं बिभेमि मदनान्धकशत्रोस्त्र्यम्बकादजिनभूषितदेहात् ।
फाललोचनभवोऽप्यनलो मामागतः प्रति शमं च समेति ॥५०॥

क्षीनि मां प्रति विमुखहनीयो मार्गणान् शरधिना न जहाति ।
पश्यतस्तमपि तस्य विनेतुं स्वीयविक्रमचयेन च शक्ये ॥५१॥

गर्विता गगनगा मनसीत्थं दुःसहेन रभसेन पपात ।
नाकलोकविभवानयने सा लोध्रमेव विरराज च सिन्धुः ॥५२॥

सिन्धुमेव नरपः परिपश्यन् रंहसा सह भुवं भ्रमयन्तीम् ।
कम्पमाननिमशीर्षक एव स्व सिणी परिविधाय च तस्थौ ॥५३॥

दीर्घिकाजलमयो पादुर्न्नं निर्मलं हि ददृशे रमणीयम् ।
स्फाटिकाश्मगजिनाछ्रमाने शोभते स गगनद्विपमासा ॥५४॥

निस्वनोऽपि सरितः स हि वेगाद्व्यानशेऽथ भुवनानि घनानि ।
तत्र केचुनिदभूद्धद्भुमीतिर्विस्मयोऽपि च तथा जनभागे ॥५५॥

दीयते यदि बलं धरणानां हीयते नरवरोऽपि हि ताभ्यः ।
दन्महेशमपि सा निपतन्ती पुष्कराग्र मनुते निमनन्त्रा ॥५६॥

वीक्ष्य विश्वरमणः सरितं तां गाढगर्वमदपूरितचित्ताम् ।
ईतिदां स कुपितः चरणाभिर्निर्बबन्ध निमिषात्स्वककेषु ॥५७॥

सापि सिन्धुरमवत्त हि दशा बिन्दुबद्धजटासु निबद्धा ।
धान्धकारगहनेऽन्धकशत्रोरन्यतामयतेव निमेषात् ॥५८॥

सर्पराजपरिभूषितदेहो गर्वसर्पमपराल्यनद्याः ।
निर्जघान निजपौरुषकान्तस्तां चकार गिरिसूनुमतत्पत्नीम् ॥५९॥

वञ्चितामिति शिवो रमणीयभ्रूयुगोऽमुचदपो कणरूपाम् ।
सप्तधा तु तटिनीं शमिताघां संविभज्य च ददौ नरपाय ॥६०॥

शम्भुना सुरसरित्सुविनीता मन्दगावनतिधारणशीला ।
जोषमीश्वरजटावनमध्यात्तिस्ससार जलदाच्चपलेव ॥६१॥

रुद्रकेशवनजा वनजाक्षी सप्तराजतसुतन्तुसवर्णा ।
वेधतेव शुशुभे मधुरास्या निर्गता स्वरयुताथ विपञ्च्याः ॥६२॥

ह्लादिनीति नलिनीति च तिस्रः पावनीति सरितो दिशमैन्द्रीम् ।
सिन्धुनामतटिनी ननु सीता चाम्पुरेव चरमां स सुचक्षुः ॥६३॥

सप्तमी तु नरपं सुरसिन्धोर्भागिनी भगवती शुभतीर्था ।
अन्वगाच्च पितरं तनुजेव स्वामिता च तपसां निधिनंत्वम् ॥६४॥

स्यन्दनं नृपवरो जयशीलो भाविपुत्रजननं विधिवाक्यम् ।
चन्द्रशेखरकृपां स्मृतिमार्गे सन्निवेश्य च विवेश हसन् सः ॥६५॥

धारणात्पुररिपुः सुरनद्या विन्दते स च नदीधरनाम ।
सापि भूपमनुसृत्य नवीनं नाम कीर्तिलसितश्च महीशः ॥६६॥

आगतां हिमवतो निलयात्सा मञ्जुलश्रुतिमनोहरशब्दम् ।
सर्वतोऽपि वितताार तरङ्गैराजुहाव च सुरान् सुरसिन्धुः ॥६७॥

सा धुनीह कुरुते भरताख्ये पुण्यपूर्णविषये चित्रलङ्कान् ।
मानवांश्च चलमङ्गसमूहैर्नर्तनं हृदयहारि तनोति ।६८॥

उत्पपात मकरो मुकुराक्षः कुत्रचित्सुरनदीजलवृन्दे ।
कूर्मनक्रतिमयः क्वचिदेवं लीलयोत्पतति वीचिसमूहे ॥६९॥

राघवैश्च जलजन्तुभिरन्यैः संयुतायुतविधैर्विधिसृष्टैः ।
राघवानुरघुवंशजमेषा निर्जगाम जगतीतलपुण्या ॥७०॥

कुत्रचित्समगतिः कुटिला सा कुत्रचिद् द्रुततरा क्वचिदूना ।
मन्दगा क्वचिदसौ विमलाम्बुर्वञ्चनां स्वसहजां दिशति स्म ॥७१॥

कुत्रचित्सुखगतिः समभूमौ कुत्रचिच्च सशिलावनिभागे ।
दुःखगा च विललर्व चकाशे जीवितं हि मनुजस्य यथा वा ॥७२॥

सागरान् गमयितुं सुरलोकं लोकपानुगमना सुरसिन्धुः ।
सागरं प्रियतमं च दिदृक्षुर्जह्नुतापसगृहस्य पुरोऽपतत् ॥७३॥

तस्य यज्ञनिलयं निखिलं सा निर्बिभेद निमिषाद्रभसेन ।
सोऽपि कोपपरवान् परमात्मा तां पपौ निजकराब्जरसं वा ॥७४॥

भूप एव यशसां निधिरेनं तापसं तु नुतिभिर्नतिभिश्च ।
प्रीणयन् पुनरवाप महर्षेः कर्णरन्ध्रविवरात्सुरसिन्धुम् ॥७५॥

तत्कुमार हरमूर्धनि जाता जाह्नवीत्यभिधयापरयासौ ।
दृश्यते त्वमपि राघव मूर्ध्ना स्वर्धुनीमिह खलु प्रणमैनाम् ॥७६॥

केवलं हि न करोति सुपूतान् सागरान् विधुरितान् दुरितारिः ।
किन्तु सर्वमनुजान् मनुजानां प्रीतिपात्र जननीव च पाति ॥७७॥

कृषीवला त्रिपथनदीशुभोदकैः सदा मुदा रघुवर सन्ति जीविताः ।
करोति सा तृणपत्रधान्यसंकुलां वसुन्धरां वसुमतनी वसुप्रदाम् ॥७८॥

स्थितापि सा तपसि सदैव निर्मला न शोषिता भवति महर्षिवन्नदी ।
अहर्निशं मुनिगणसङ्घविष्णुना विभाति च त्रिभुवनकीर्तिता गुणैः ॥
भागीरथी भाग्यसमुद्रमातं नृपेन्द्रमन्वेति कलेव पूर्णा ।
तामन्यमर्त्याः किल सिद्धयक्षास्तथैव पद्माञ्जलयोऽन्वगच्छन् ॥८०॥

सापि प्रियं सर्वनदीप्रियं तं
चिराद्वि दृष्टं स्वतरङ्गहस्तैः ।
हठात्परीरभ्य ननर्त हर्षा-
त्तरङ्गिणी पूर्णमदा प्रियेव ॥८१॥
इत्थं समुद्रेण समं समेत्य
प्रमोदयौ शैवलिनी च पश्चात् ।
रसातलं यत्र पितामहानां
भस्मीकृतानां निचयः किलासीत् ॥८२॥
विमोरतुलां प्रतिमान्य गङ्गा
चकार तानाशवतोऽथ नावम् ।
ब्रह्मा ततो वीक्ष्य जिनप्रयत्नं
भगीरथं तं निजगाद तुष्टम् ॥८३॥
यावत्प्रभो शैवलिनी भुविस्था
तावत्त्वदीयाः पितरो दिविस्थाः ।
यावच्च चन्द्रार्कमरीचयोऽत्र
तावत्त्वदीया धवला सुकीर्तिः ॥८४॥

मङ्गल्यवाचा महनीयकीर्ति
   शुभाशिषा सर्वमहीपवन्द्यः ।
उक्तो विधात्रा तदनु प्रपेदे
   पुरीं स्वकीयां जनरञ्जनाय ॥८५॥

श्रुत्वा हृष्टो दशरथपुत्रो
   गङ्गातीरे मुनिजनमध्ये ।
विश्वामित्राननजनितोक्तिं
   धन्यं नूनं स्वयमति मेने ॥८६॥

गङ्गोदन्तं श्रुतिसुखनिनदं
   रामः श्रुत्वा पुलकितदेहः ।
साश्चर्यश्च श्रितकुशाश्व
   श्रीकान्तोऽभूदतिरुचिराम्यः ॥८७॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

इति श्रीसीतास्वयंवरे महाकाव्ये कथङ्के

॥ गङ्गावतरणं नाम ॥

॥ नवमः सर्गः ॥

श्रीः

## ॥ दशमः सर्गः ॥

## ॥ सप्तमरुज्जननम् ॥

अथ शर्वरीं स रघुवंशसत्तमो
हृदये प्रणम्य कुलकीर्तिकारणम् ।
सगरं भगीरथनृपालकं तथा
ह्यनयत्सुखेन कथयोल्लसन्विभुः ॥१॥

सुरसिन्धुवीचिचयदत्तनिस्वने
पिकबर्हिहंसविहगोक्तिरञ्जिते ।
कविकृष्णसारचरिते सनर्तने
विपिनेऽपि रामरनुजौ निदिद्रतुः ॥२॥

अरुणोदयेऽथ दिनवल्लभः करैः
स्पृशति स राघवमुखाम्बुजं मुहुः ।
तनयं पितेव मुदितो गुणान्वितं
शयनस्थितं हि समये दिनोदये ॥३॥

झटिति प्रभुः स शयनं कुशार्चितं
सह लक्ष्मणेन च विहाय राघवः ।
दिनकर्मसर्वममलाम्बुबिन्दुभिः
प्रणिधाय धामनिधिमीड्यमस्तवीत ॥४॥

तदनन्तरं स मुनिनाथमब्रवी-
　दविलम्बितं ननु तराम जाह्नवीम् ।
इति योगिदुर्लभवचांसि कर्णयो-
　रपतन्मुनेरमृतबिन्दवो यथा ॥ ५ ॥

भवसागराम्बुपतितान् प्लवो यथा
　ननु तारयिष्यति रघूद्वहो नरान् ।
स तथापि तापसवरैर्महाशिरा-
　द्वितितीर्षुरेव तटिनी जवात्प्लवम् ॥ ६ ॥

स चिरन्तनेन सहित प्लवस्तटं
　त्वरयापरं प्रविशति स्म निर्भरम् ।
अथ तत्र कौशिकमुनिः कुशासनं
　समुपविश्य वक्तुमुपचक्रमे कथाम् ॥ ७ ॥

विविधाभिराहृतहृद प्रभोरथो
　न कथाभिरस्य हृदयं विकर्षिणम् ।
सकुतूहलेन मनसाशृणोत्कथा
　ननु बालकेऽस्ति मनस स्पृहेदृशी ॥ ८ ॥

रघुवीरचित्तमपरत्र यत्नतो-
　प्यभिनेतुमास न च हंसखेलनम् ।
अथवापि भृङ्गमहिताम्बुजावलि-
　र्जलजन्तुचारुजलखेलनं तथा ॥ ९ ॥

विधुमण्डलाकृतिधरो अपोऽम्भसां
न मनश्चकर्ष सुरसत्तमस्य च ।
अभिवाञ्छति स न जलं पिपासया
न बभूव तत्र न निपीडितः क्षुधा ॥ १० ॥

न विवेद भेदमखिलार्तनन्दितः
शिशिरोष्णयोश्च दिवसत्रियामयोः ।
स कथाश्रवेण वसुधाद्युलोकयो-
रमृतं पिबन्निव बभूव राघवः ॥ ११ ॥

नवमल्लिकासुमनिभैस्तरङ्गिणी-
सितनीरबिन्दुभिरलंकृतो विभुः ।
नवमालिकाभिरिव भूषितो बभौ
विगुणाभिरप्यमलकान्तिमुद्वहन् ॥ १२ ॥

अमरापगा यदि पयोनिधिर्भवे-
त्तरिरेव तत्र भुजगाधिपाकृतिः ।
भगवानभूद्दशरथात्मजस्तथा
भुजगेन्द्रभोगशयनः स्वयं यथा ॥ १३ ॥

अथ पत्तनस्य चरितं पुरातनं
कुशिकात्मजस्तु रघुनायकार्थितः ।
सुरसिन्धुतीरलसितस्य शासितुं
मधुरैर्वचोभिरुपचक्रमे क्रमात् ॥ १४ ॥

अदितेः सुताश्च दितिजाः पुरा विभो
पयसां समुद्रममृताय सत्वरम् ।
मरणं जरां च विजिगीषवस्तथा
मथितुं च हर्षसहिता वितेनिरे ॥ १५ ॥

पयसां समुद्रमथ मन्दराद्रिणा
दितिजाः सुराश्च निममन्थुरुत्सुकाः ।
भुजगं विधाय मथनस्य वासुकिं
सुदृशां च रश्मिमतिभास्वरं वरम् ॥ १६ ॥

प्रथमं बभाम मथनाद्विभीषणं
गरलं भुजङ्गरमणः स्वरक्ततः ।
सविषो ददंश मथनाद्रिमुच्चकै-
रप्सरा ततश्च परिपेतुरङ्गना ॥ १७ ॥

इति भूरिभारमथनतः सुरासुराः
प्रथमान्तरायविहतास्तदन्तरे ।
इव विसनाशमुदितास्त्वकिञ्चना-
श्चकिता बभूवुरपि ते निपीडिताः ॥ १८ ॥

हरितो घनान्धतमसेन चावृताः
सकलं जगद्धि विकलं व्यतिष्ठत ।
शरणार्थिनोऽथ शरणं शिवं सुरा
ययुरेव दुःखदमनं दयार्णवम् ॥ १९ ॥

विबुधार्थितः स भगवानुमाधवो
हसता मुखेन निमिषाद्विषं पपौ ।
अभवद्धरस्य तदथामृतोपमं
विरराज कण्ठनिलये सिताकृति ॥ २० ॥

अथ चन्द्रशेखरगलस्थितं विषं
विरराज पूर्णशशिनीव लक्षणम् ।
विषनाशनं स परिवीक्ष्य ते सुराः
निमथन्ति दुग्धनिधिमेव तं पुनः ॥ २१ ॥

रमणीय एव ददृशे स सागरः
पयसां कणान् हि विकिरन् खमण्डले ।
मथितान् मणींस्तु निजगर्भसंस्थितान्
पुरतो विधातुमिव सर्वतः सताम् ॥ २२ ॥

क्वचिदूर्मिपङ्क्तिरभवद्भयङ्करा
निखिलेषु तेषु निमिषत्सु सागरम् ।
किमु वासुकिः स निजदेहसंस्थया-
र्भुजगानसून् शतशः किलैक्ष्यत ॥ २३ ॥

गजहस्तराशिसदृशी रघूद्वह
क्वचिदेव भङ्गविततिर्व्यभासत ।
क्वचिदम्बुदावलिनिभा मनोहरा
क्वचिदावभाविव च राजवासिता ॥ २४ ॥

कुटिला क्वचिच्च वनितालकोपमा
विमला क्वचित्स्फटिकसन्निभा बभौ ।
सरला रराज मुकुराकृतिः क्वचि-
त्तरला तरङ्गसरणिः पयोनिधौ ॥ २५ ॥

मकरन्दबिन्दुभरितः समीरणः
सुरभिर्बभूव पयसा च शीतलः ।
क्षणदाचरैश्च विविदे सुरैस्तथा
मथनश्रमो न किल तेन वीजितैः ॥ २६ ॥

अयुतं गतं हि शरदां स सागरः
मथितोऽपि भूरि न ददौ सुधारसम् ।
विगतात्मसत्त्वविभवो तदम्बुधु
प्रममज्ज मन्दरगिरिर्भयप्रदः ॥ २७ ॥

प्रथमापदां हि हरणाय ते सुराः
शरणं हरस्य चरणौ ययुर्भवात् ।
अधुना हरेः पदयुगं विपद्धरं
ययुरेव बद्धनिजपाणिपल्लवाः ॥ २८ ॥

जगदुःखनाशनविधौ प्रभुः सदा
भवतीह यः स जगदेकवल्लभः ।
कृपयान्वितश्च परमां निवेल्लटं
सहसाजगाम सुमनावनाय च ॥ २९ ॥

कमठाकृति स भगवान् वहन् हसन्
प्रटिति प्रभुश्च निममज्ज नीरधौ ।
अचलं स्वपृष्ठनिलयेन धारयन्
स्तुतिभिः सुरैः प्रमुदितैश्च तुष्टुवे ॥ १० ॥

हरिविक्रमेण पुनरुद्धृते गिरौ
परिमथ्य नेत्रयुगगोचरं सुराः ।
पुरुषं च चकुरमलं महाद्युति
सकमण्डलुं हि गदनाशनप्रभुम् ॥ ११ ॥

स बभूव राम हरिसन्निभः स्वयं
ह्यपरावतार इव तस्य भूतले ।
निखिलस्य रोगनिवहस्य नाशको
निपुणश्चिकित्सककृतौ महामतिः ॥ १२ ॥

अधुनापि राम स जनेन पूज्यते
भगवान् सदा सकलरोगघातकः ।
रहितेन रोगनिवहैर्दयाम्बुधिः
परिपालयन्निखिलमद्भुतं जगत् ॥ १३ ॥

तदनन्तरं हि मथनादभूत स
रमणीगणं च गुणरूपरञ्जितम् ।
परिचारिकाभिरनुयातमप्यहो
नवनीतखण्डमिव सागरस्नदा ॥ १४ ॥

भगणा इवाम्बुधिनभस्तलोद्गता
अथवैव वाडवकणाः सहस्रशः ।
स्खलिताश्च भूषणशतैस्तडिन्निभाः
सहसा प्रसादहसिताश्च या बभुः ॥ २५ ॥

अगृहुः स्त्रियोऽथ न च केऽपि ताः शुभाः
विबुधेषु तेषु गुणशोभिता अपि ।
अमृताय भूरि यतमानचेतसां
न चचाल चित्तमपरत्र किंचन ॥ २६ ॥

वनिताः सुरेशभवने वनोद्भवा
गणिका बभूवुरपरिग्रहात्किल ।
अधुनापि ताः प्रथितरूपभूषिता
दिविजेन्द्रभोगनिरता भवन्ति हि ॥ २७ ॥

वनितासु तासु विविधा गुणावलि-
र्निखिला मयाद्य भणितुं न शक्यते ।
नवयौवनाश्च वनजेक्षणास्तु ता
वनवासिना न मनसा मयेक्षिताः ॥ २८ ॥

शृणु राघवेन्द्र पयसां हि सागरा
दुदभूच्छ्रियो निधिरपीन्दिराभिधा ।
शिखरे वरे मथनभूधरस्य सा-
प्यनुकूलनेव वरमन्त्रमुत्तमम् ॥ २९ ॥

रुचिरे सहस्रदलशोभितेऽम्बुजे
निजपादपद्मयुगलं निवेश्य च ।
रमणीयरूपपरिशोभितानना
करुणार्द्रदृष्टियुगला रमा बभौ ॥ ४० ॥

सुशिरीषपुष्पमृदुदेहसम्पदा
नवमल्लिकाकुसुमनिभद्विजावलिः ।
तपनीयरम्यरशनाकलापका-
ञ्चशोणिताधरपुटेन सा बभौ ॥ ४१ ॥

मणिभूषितेन मुकुटेन राजिता
चतुरा च मन्दगमना मलापहा ।
अति चञ्चलाक्षियुगला स्वशोभया
निजघान नेत्रविषयं हि पश्यताम् ॥ ४२ ॥

मधुसूदनस्तु कमलां मनोरमां
नयनाञ्चलेन च विलोक्य कौतुकात् ।
विनता ह्रिया कुचभरेण च क्षणा-
ज्जगृहे करेण हृदये व्यधात्ततः ॥ ४३ ॥

नवनीरदाभहृदयं मधुद्विषः
कमलातनोः पुलकितं व्यराजत ।
चपलेव सापि कमलास्फुरद्धृदि
स्फुरदंशुजालमहिता हितप्रदा ॥ ४४ ॥

मणिवर्य एव रघुनाथ कौस्तुभो
द्युमणिर्यथा स्वकिरणान् विसारयन् ।
उदयाद्रिशृङ्गमधितिष्ठतीव सोऽ-
प्युदियाय मन्दरगिरौ पयोनिधेः ॥ ४५ ॥

तमपीन्दिरासहभुवं मणिं प्रभु-
र्धृतवान् स्वयं मधुरिपुर्मुदा युतः ।
हृदये श्रिया विलसिते प्रियासुहृदं
नवसङ्गमे किल समाचरत्ततः ॥ ४६ ॥

मदिरा बभूव तदनन्तरं जले
मथनाधिकात्मजनिता मदलसा ।
अदितेः सुतास्तु परिपीय तामथो
अभवन् सुरा इति ततोऽसुराः परे ॥ ४७ ॥

कविसार्वभौमवचनद्युतिप्रदो
विधुराविरास पयसां निधेस्ततः ।
युवतीमुखोपमितमूर्तिरञ्जसा
जगतां प्रमोदफलदानकृद्यया ॥ ४८ ॥

उडुनायकं हि मृगलक्ष्मणाश्रितं
गिरिशोऽपि इन्द नयनत्रयेण च ।
शकलं बलामहि यस्य मूर्धनि
जटयायुतो स निदधे च तत्क्षणात् ॥ ४९ ॥

स तदाप्रभृत्यमवदिन्दुशेखरः
परिभूषितस्तरुणचन्द्रमःकरैः ।
हिमरश्मिरप्युत्तमतोत्तमं यशः
प्रथितं जगत्सु हरशीर्षलङ्घनात् ॥ ९० ॥

गजरत्नमाविरभवत्सरस्वतः
स्फटिकोज्ज्वलं च भुवनेषु वन्दितम् ।
तुरगो रयेण सहितस्तदा ततो
दिविनाधिपो झटिति तौ समाददे ॥ ९१ ॥

पयसां प्रदा च पयसां निधेरभू-
त्कपिलाय राम जनकामदायिनी ।
तव पूर्वजेन च सुताय रक्षिना
सुरभिः सुरासुरवरादिसेविना ॥ ९२ ॥

अथ पञ्चदेवतरवः समुज्ज्वला
इव मौक्तिकैः स्वकुसुमैः समावृताः ।
अभवन्निमे सुरवरेण नन्दने
विनिवेशिता उपवनासगो यथा ॥ ९३ ॥

हरिचन्दनादितरुभिर्हरिर्मुदं
समविन्दताभिनवशीलसंयुनाम् ।
तरवोऽपि ते च परिपूजिताः सुरैः
प्रददुः समस्तहृदयाभिकाङ्क्षितम् ॥ ९४ ॥

अमृतं ददौ मतिमती मृदुस्वना
दिविजेशमुख्यविबुधेभ्य एव सा ।
दितिजास्तु रूपगुणमोहिताः किल
स्मृतिदूरमेव विदधुः सुधारसम् ॥ ६० ॥

अपरेभ्य एव निखिलं सुधारसं
प्रविभज्य चेत्यममरेशवन्दिता ।
छलनिर्जितान्दनुभवान् स्वमायया
नवमोहिनी ननु विधाय निर्ययौ ॥ ६१ ॥

दितिरात्मपुत्रविपदं सुरैःकृतां
प्रविचिन्त्य राम बहुदुःखिता द्रुतम् ।
स्वपति जगाम शरणं विमूर्च्छिता
नयनस्थबाष्पजलबिन्दुभिः समम् ॥ ६२ ॥

पतिता पदे पतिपरायणा प्रभोः
पुरुहूतनाशकरमात्मने वरम् ।
अभियाचते स्म विनता नयेन सा
बहुदुर्भरा हि भुवि मातृवेदना ॥ ६३ ॥

परिसान्त्वयन् स परितप्तमानसां
दयितां जगाद सुतशोकपीडिताम् ।
करुणाप्लुतेन वचनेन कश्यप-
स्तपनार्दितामिव भुवं नवो घनः ॥ ६४ ॥

यदि काङ्क्षसि त्वमिह लब्धुमीदृशं
तनयं तपःसु निजमानसं शतम् ।
दशहायनानि शुचिकर्मसु स्थितं
प्रविधेहि देवि भव वासवार्चिता ॥ ६५ ॥

पतिवाक्यमित्यमथ सा पतिव्रता
हृदरीचकार कुररीविलोचना ।
परिचर्ययापि कृतया बलद्विषा
दिवसाञ्जिनाय सुतजन्मकाङ्क्षिणी ॥ ६६ ॥

दितिरुग्रचर्यनियमैः कृशा भृशं
जननी नतात्मशिरसा मृदूक्तिना ।
सुरनायकेन सततं हि सेविता
सुधिया सुतेन तपसि स्थिराभवत् ॥ ६७ ॥

भणति स्म राम दितिरेकदा सुतं
वरिवस्ययास्य मुदितातिनिर्भरम् ।
विनता भवन्ति परिपान्थिनः सदा
निजकार्यलाभगणनासु तत्पराः ॥ ६८ ॥

शृणु मेघवाह यदि मे सुतोऽनघः
क्रियमाणयेह तपसो भविष्यति ।
सह तेन भूमिमखिलामिमां भवा-
नभिशास्तु तेन लभतां सुखं तथा ॥ ६९ ॥

वचनेन मातुरमराधिपस्ततो
मधुरेण नास गतभीतिमानसः ।
रिपुजन्मनापि निजवीर्यघातिना
ह्यतिनागरूकचरितश्च शङ्कितः ॥ ७० ॥

अथ कश्यपस्य दयिता सती दिति-
र्दशवत्सरैरिह तपःक्रियाफलम् ।
भवतीति केवलमतीव तोषिणी
विमुखी बभूव नियमेऽपि निर्मले ॥ ७१ ॥

शयनं रवौ गगनमध्यगेऽहनि
प्रविवेश पादयुगलं शिरःस्थले ।
स्वशिरस्तथाङ्घ्रिविषये विधाय च
स्वपिति स्म सर्वनियमात्पराङ्मुखी ॥ ७२ ॥

शुभिघातिनीं तु तरसा शचीपति-
र्विकृतप्रतीकमहितां च साशनिः ।
जठरं प्रविश्य निजघान सत्वरा
,रिपुनात्मनश्च स जरायुसंस्थितम् ॥ ७३ ॥

इति भिन्नगर्भसहितातिबाधया
प्रतिबुध्य साथ विनिनिन्द मूर्खताम् ।
पुरुहूतमार्यमभिजातमाज्ञया
निबबन्ध राम स बहिर्गतः क्षणात् ॥ ७४ ॥

अपराधमेव जननीकृतं ततो
विशदीचकार बहिरागतो हरिः ।
निजगाद बद्धकरपल्लवश्च तां
परिसान्त्वयन्निव शुभं गिराभवत् ॥ ७५ ॥

जननि क्षमस्व दययाप्यमुं जनं
कलितापराधमिह ते पदानतम् ।
विकृताननां नियमघातिनीमहं
भवतीमकार्षमिह दण्डभागिनीम् ॥ ७६ ॥

न भवानिहापचरितस्य कारणं
भवतीति शङ्कमवधेहि निश्चयः ।
अहमेव निन्द्यचरितामवं नृप-
श्वपमार्गगा ननु भवन्ति शासिता: ॥ ७७ ॥

भस्मो भवन्तु तव शासनाद्वरं
मम सत्त्वेव निहत्याद्य गर्भगाः ।
प्रियमेव ते भक्तिर्णा चिकीर्षवः
प्रतिपालयन्तु हरितः सदानिशाः ॥ ७८ ॥

प्रथमो भवत्तु भुवनं प्रजापते-
रपरस्त्वसौ त्रिपुरतोऽनघचरणः ।
गगने तृतीयमहदर्पतिवर्णो
विचरन्तु देवर ते महाभटाः ॥ ७९ ॥

इतरे दिशां हि परिपालने रताः
मरुतोऽभिवान्तु मम सप्तधा कृताः ।
इति याचनां स जननीमुखोद्गतां
प्रतिमान्य तद्वदकरोद्यथाविधि ॥ ८० ॥

यत्रैव शक्रो जननीं सिषेवे सहस्रसेवाभिरनिन्दिताभिः ।
तत्पत्तनं पश्य पुरो विशालं विशालकीर्तिप्रथितं कुमार ॥ ८१ ॥

पुरीमिहैनां सुमतिः प्रशास्ति प्रभूनदाक्षिण्यनिधिर्नरेन्द्रः ।
यं प्राप्य तुल्याधिपतिं विशाला राजन्वतीवास्ति बहुप्रशस्ता ॥८२॥

इक्ष्वाकुवंशप्रभवः स धीमानन्वर्थनामा नरराजवर्यः ।
श्रुत्वा चिरादागमनं मदीयं प्रत्युद्गतः पश्य सबन्धुवर्गः ॥ ८३ ॥

निगदितवति चैवं तापसानामधीशे
सुमतिरपि समन्त्री स्वागतं दातुमर्हः ।
नरवरतनयाभ्यां श्रीयुताभ्यां च तेभ्यो
मुनिजनगिचयेभ्योऽभ्यागमातिहृष्टः ॥ ८४ ॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

इति श्रीसीतास्वयंवरे महाकाव्ये श्र्यङ्के

॥ सप्तपरुज्जननं नाम ॥

॥ दशमः सर्गः ॥

श्री

## ॥ एकादश सर्ग ॥

## ॥अहल्योद्धरणम् ॥

सुमतिरथ मुनीन्द्रं व्याजहारेति वाणीं
नयनमुदमवाप्य श्रीपतेर्दर्शनेन ।
निशिचरसकलौघान् सर्वदा निर्गतासू-
निव भुवनतलेऽस्मिन् कर्तुमेवोद्यतस्य ॥ १ ॥

मुनिवर कथय त्वं कौ कुमारौ विहस्यौ
मदनरुचिररूपौ मञ्जुहास्यौ च धीरौ ।
कमलविशदनेत्रौ शास्त्रविद्याप्रवीणौ
प्रतिहतदुरितौघौ प्रश्रयोन्नम्रशीर्षौ ॥ २ ॥

दशशतकिरणे खे पावनं व्योमदेशं
निखिलमपि विधाय प्रोज्ज्वलं तेजसेव ।
भुवमपि परिपूता तद्वदेवानुकर्तुं
भुवि कृतसुखवासौ तिग्मशीतांशुमन्तौ ॥३॥

भुजबलपरिपूर्णौ बालकौ भास्कराभौ
सकलभुवनरक्षाकर्मदक्षौ विभातः ।
इव सुरपतिविष्णू भूमिविष्टावतारौ
सितहृदयसमेतौ कम्बुकण्ठौ सुवीरौ ॥ ४ ॥

श्रुतिसुखनिनदं तद्रामकीर्तिप्रपूर्णं
वचनमभिनिशम्य प्रत्युवाचाथ भूपम् ।
सुमतिममलकीर्तिस्तापसानामधीशो
विकसितमुखपद्मो रामचन्द्रानुयातः ॥ ५ ॥

नृपवर मम यज्ञं विघ्नहीनं विधातुं
निशिचरबलनाशं सानुजः सुष्ठु कृत्वा ।
विलसति विजयश्रीश्लिष्टगात्रः पुरो यो
दशरथवरपुत्रं विद्धि तं रामचन्द्रम् ॥ ६ ॥

स यदि शरसहस्रं विद्युदुल्लोलकल्पं
विकिरति बहुवेगात्कोपताम्रायताक्षः ।
त्रिभुवनमपि काले क्षीयते वा निमेषे
निखिलजगदधीशश्चैष विष्णुर्हि साक्षात् ॥७॥

जनकनृपतिदेशो कार्मुकं शैवमुग्रं
दशरथतनुजाभ्यां दर्शयित्वा च यज्ञम् ।
सह मुनिभिरयोमि सम्यगाराध्य राजन्
पुनरपि मम शालामागमिष्यामि सार्यः ॥८॥

तदनु दनुजशत्रू मित्रवंशप्रदीपौ
सुखकरवचनेन स्वागतीकृत्य ताभ्याम् ।
पुलकितनिजदेहो हर्षपीयूषवर्षी
सुमतिरपि मुनिभ्यो दत्तवान् सत्सपर्याम् ॥९॥

अथ दिनमपि नीत्वा तत्र चैकं स रामः
सुमतिनृपकराग्रं प्रेमपूर्णो गृहीत्वा ।
मुनिभिरभिसमेतः कल्पवृक्षो जनानां
जनकपुरमयासीत् तोषयंस्तं नरेन्द्रं ॥ १० ॥

प्रथममथ नगर्या व्योममार्गे स्थितानां
रघुवरमुनिवर्यान्तुङ्गसौधाग्रभागान् ।
जलधरनिवहानां स्पर्धयेव प्रजातान्
सह ददृशुरमन्दानन्दसान्द्राः समूहैः ॥११॥

नृपतिभवनमूर्ध्नि स्थापितः केतुदण्डः
कनकरजतमिश्रो मेघवृन्दे निलीनः ।
पवनगतिविधूतो मानसे तापसानां
झटिति ननु ततान ह्रादिनीभ्रान्तिमेव ॥१२॥

धनिकजनगृहाग्रस्थापिता दीपसङ्घा
गगनतलसमीपे प्रस्फुरन्तः समग्रं ।
निशि शशिरहितायां तारकाणामवस्थां
नगरवरजनानां पश्यतां प्रापुरद्धा ॥ १३ ॥

उपसि जनकपुर्यां निर्गते छात्त्रवृन्दे
निगमवचनराजिं ब्राह्मणैर्वेदविद्भिः ।
प्रतिदिनमधिगीतामाशृणोद्रामचन्द्रः
कविरचितकथानां मञ्जुगीतिं तथैव ॥ १४ ॥

अथ रघुकुलनाथः पत्तनं सर्वतस्त-
त्प्रियमिव नवकान्ताबाहुपाशेन बद्धम् ।
नगररसिकलोकप्रेममूलं मनोज्ञं
ह्युपवननवपल्लीसंवृतं संददर्श ॥ १५ ॥

इदममृतनिधानं श्रीमदिन्दीवराख्यं
ह्युपवनमिह पुर्याः पूर्वभागोल्लमच ।
कथयतु मुनिवर्य प्रार्थनां मे निशम्य
क ■■ वसति धीमांस्तं भवान् सत्यकर्मा ॥१६

इति निगदितवन्तं राममारामशोभा-
समुदयहृतचित्तं चित्तजन्माभमेनम् ।
हसितवदनलक्ष्मीलालापानां वरेण्यः
कथयति चरितं तद्गौतमर्षेः स चैवम् ॥१७॥

इह हि तपसि मग्नो गौतमः ख्यातवृत्तो
वसतिमखिलवेदध्यानमात्रेण तुष्टः ।
अतनुत निजपत्नीसेवया पूज्यमानो
विशदहृदययुक्तो निर्ममो निश्चलश्च ॥१८॥

पुनरपि पुरशत्रुश्चात्र निःशङ्कमेव
   स्थिति मनसि विभाव्य ज्ञाततत्कोपतापः ।
तमिह कुसुमधन्वा साध्वसध्वस्तचित्तः
   सकृदपि हरमासं गौतमं नाभ्युपायात् ॥१९॥

प्रतिदिनमथ नैजप्राणनाथाङ्घ्रिपासद्-
   द्युतिलसितदृगब्जा मन्दहासाननश्रीः ।
पुररिपुमिव पूर्वं पार्वती वल्लभं सा
   तपसि निरतमेनं सेवयाराधयच्च ॥ २० ॥

शिरसि पतिपदाब्जं मण्डनं तन्वती सा
   पिबति चरणधौतं नीरमिन्दीवराक्षी ।
पदकमलपरागं धारयत्याननाब्जे
   भवति मनसि तृप्ता दिव्यसौख्याभितुष्टा ॥

उटजमभित एषा वर्धयामास वृक्षा-
   नपि मृगशिशुसङ्घान् पुत्रवात्सल्यपूर्णा ।
स्तनघटपरिपूर्णैर्निर्मलैः सा पयोभी
   रघुवर नयनाभ्यां प्रीतिर्दास्ते वनान्ते ॥२२॥

अतिथिजनशरण्या पर्णशाला महर्षे-
   र्विपुलविमलकीर्तिः सेविताहल्यया सा ।
उपवनवलयस्था स्थावराणां समूहे-
   ष्वसुखमिव दत्ता मूकं वा चकासे ॥२३॥

सुरपतिरथ दृष्ट्वा चैकदा चारुमूर्तिं
निरुपमनिजरूपां धर्मपत्नीं महर्षेः ।
विषमशरशराणां लक्ष्यतामेत्य मुह्यन्
मुनिवरतनुधारी तां शुभामाबभाषे ॥ २४ ॥

धृतमुनिवररूपं विद्धि मां पद्मनेत्रे
निखिलत्रिदिवराजं सर्वनम्यं शरण्यम् ।
तव निरुपमरूपोन्मोहितोऽत्रागतोऽहं
क्षणमिह मम भूत्वा कामिनी रञ्जयस्व ॥ २५॥

दशशतनयनं तं चैवमाभाषमाणं
नयनयुगलकोणादेव दृष्ट्वा सहासम् ।
दशनकिरणभाभा देवराजं निहत्य
भुवमपि नखशृङ्गैः सादरं चोल्लिलेख ॥२६॥

अपि सकलविदिता गौतमप्रेममूर्ति-
र्धुरि शुभचरितानां सुन्दरीणां स्थितापि ।
अपि बलसहिता सा यस्मात्कर्तुमिन्द्रं
ह्यभिलषति मुनिस्त्री तेन सार्धं स भोगम् ॥

सुरपतिरपि कामोत्पीडितस्तामियाया-
प्यथ वरवनिता सा तं तथैवोज्जगाम ।
न हि परिचितशास्त्रा सा महर्षेः प्रियार्या
कलुषमिति विदित्वा चक्रतुस्तौ महाघम् ॥२८॥

कृतदुरितमिहैवाज्ञानतः पूरुषं नु
प्रभुरतिकरुणाब्धिः क्षाम्यति प्रार्थितस्तम् ।
न तु तमिह कदापि ज्ञानतः क्रूरकार्यं
यदयमखिलकाले दण्डनार्होऽस्ति राम ॥२९॥

अधरनवरसस्यापानमारभ्य जिष्णुः
सकलसुरतचेष्टास्तापसस्त्रीसमेतः ।
विहरणकृतिमग्नस्तत्र निर्विश्य कामं
स्वपुरगमनसक्तो भीतिविद्धश्चकम्पे ॥ ३० ॥

मुनिवरदयितां तां देवराजः समीक्ष्य
मुहुरपि न जगाम स्वेच्छया भुक्तकामाम् ।
कथमपि च विहायैनामात्मरक्षार्थमेवं
कुपितमुनिवराख्यादाविरासीत्स तत्र ॥ ३१ ॥

मुनिमुखमथ जिष्णुः प्रोद्गमत्कोपवह्नि
नयनदशशतेन प्रेक्षितुं नापि शेके ।
भयकृततनुकम्पश्चानुतापावृतात्मा
किमिति स करणीयं वेद न प्रस्थितो न ॥३२॥

अमरपतिमशीलं दुष्टशीलां च पत्नीं
मघवकितवमर्षैर्न तां सशोकां विनम्राम् ।
मुनिरशपदुरुश्रीः स्पष्टवाण्या गभीरं
न हि मुनिजननाथा धर्महानिं क्षमन्ते ॥३३॥

अभवदमरनाथो निष्फलः शापवाण्या
वरतनुरपि भार्या तस्य पाषाणरूपा ।
तव रघुकुलकेतोर्दर्शनात्सा विमुक्ता
भवति वचनसारात्सारयुक्तस्य तस्य ॥ ३४ ॥

इह हि वसति नूनं धर्मपत्नी महर्षे-
रुपलविपुलदेहेयन्ति वर्षाणि वत्स ।
तदपनयविपत्तिं सत्यधर्मप्रभो त्वं
तव भुवि पदपद्मादस्ति नान्या गतिर्नः ॥३५॥

अथ स रघुवरेण्यो रामचन्द्रः शिलायाः
स्वपददशनखानां पङ्क्तिमेवानिनाय ।
निकटमपि यदा सा स्वीयरूपं हि धृत्वा
मुनिभिरपि नदृष्टं पादपद्मं ददर्श ॥ ३६ ॥

मृततनुरिव विद्युच्छक्तिसंपर्कहेतो
रघुवरपदपद्मात्सा शिला संचचाल ।
प्रथममिह न दत्ते प्राणवायुं कदापि
ह्युपलमथ पदोऽब्जोज्जीवयामास युग्मम् ॥३७॥

झटिति करपुटं सा सुष्ठु बद्ध्वा स्वबन्धुं
गलदमृतनिभाश्रुप्रोतनेत्राम्बुजाता ।
परमपुरुषमग्रे संस्थितं रामचन्द्रं
विमलवचनपूर्णैः स्तोत्रसङ्घैरथास्तौत् ॥ ३८ ॥

तव रघुवर पादस्पर्शनं मां तनोति
विगतदुरितबाधां श्रीसमेतां सुशीलाम् ।
मम नतिशतमद्य स्वीकुरुष्वार्पयामि
सहितमथ च भक्त्या भावनातीत बन्धो ॥३९॥

भयदभुजगवक्त्रादद्य निष्क्रम्यमाणां
विपुलजलधिमध्यादुद्धृतां वाथ मन्ये ।
दवहुतवहतापाद्रक्षितां वा दयाब्धे
तवपदनलपङ्कैः स्पर्शनान्मोचितां माम् ॥४०॥

भवति भवति नाथे सर्वदेवे कृपालौ
भवति भवविमुक्तः पापकर्मापि मर्त्यः ।
भवविधिसुरराजैः सन्नुताङ्घ्रे मुरारे
किमुत नयगुणाढ्यः सज्जनो गाढभक्तिः ॥४१॥

प्रभवति तव शक्त्या लोकवृन्दं समस्तं
तदनु तदवसि त्वं आगतको हि विष्णो ।
प्रलयमपि विधाय त्र्यम्बकोऽपीह नृत्यं-
स्तव चरितमभिज्ञैर्नैव शक्यं ग्रहीतुम् ॥४२॥

गतिरसि मम बन्धो रामचन्द्र त्वमेवा-
प्यनवरतमहं ते पादपद्मं प्रणौमि ।
अधिवससि मनांसि ज्ञानदातर्यतीनां
भव मयि च कृपावान्-सर्वदा सर्वरामः ॥४३॥

न भजति मम जिह्वा तृप्तिमार्तार्तिहारिं-
स्तव मधुमधुरनाम्नां कीर्तनेनापि भूयः ।
ग्रहणपरिविसृष्टा चन्द्रलेखेव जाता
ह्यहमिह रघुनाथ त्वत्पदाब्जप्रपूता ॥४४॥

मिहिरकुलमणे ते दर्शनेनैव विन्दे
मुदमहमतिशुभ्रां नापि दृष्टां हि पूर्वम् ।
सफलमपि च जन्माप्यद्य मेऽस्तीह धन्या
मधुरमधुरसस्यापानमत्तेव मामि ॥४५॥

स्मरणममलकीर्तेस्ते सशोकां हि विष्णो
परममुदितचित्तामातनोतीति मन्ये ।
दशरथतनुजात क्षुत्पिपासाभिपीडां
गणयति न कदापि त्वन्निविष्टं मनो मे ॥४६॥

वसति निखिलजीवेष्वार्य सद्भिः प्रपूज्य
लसति कुसुमराजिः कालधर्मानुसारम् ।
दशशतकरमाली द्वादशात्मा सतेजा
भवति रघुवरेन्दुः कान्तिमांस्ते महत्वात् ॥४७

निखिलभुवनरक्षाकर्मदक्षोऽतिमारं
वहसि किल तथापि प्रस्फुटास्याम्बुजातः ।
सुखमुपरि महाहेर्योगनिद्राभिभूतो
विहगपतिसमेतः सश्रुतो लोकमात्रा ॥४८॥

कियदपि किमपि वक्तुं त्वत्कृपाया भवामि
अतिगुणकथनं ते वर्णनातीतमेव।
भज इति सुलभो न प्राप्तुमित्यादिवाक्यैः
कथमिह भणितोऽपि प्रेक्षितस्त्वं मयासि ॥८९॥

समभवदिह सर्वं विष्टपं त्वत्त आदौ
तदनु पवननीरे प्रादुरास्तां खवह्नी।
य इह शुभचरित्रं स्तौति तं नैकदा त्वां
मृतमिति खलु मन्ये प्राणिनं सर्वथापि ॥९०॥

तव चरणसपर्या जीवनं मे दयालो
रघुवर मम सैव प्राणवायुस्तथा हि।
धनमपि मम बन्धो भाग्यमुत्साह ओजः
सकलमिह मदीयं तत्वतस्त्वदीयम् ॥९१॥

नयविनयगुणाढ्याः सज्जना मानवा ये
निजहृदयतले त्वां सर्वदा चिन्तयन्तः।
किमु भयचकितास्ते सारहीने प्रपञ्चे
भवभुजगविदष्टा यान्ति वा कान्दिशीकाः ॥९२॥

बलिनृपतिरिवाहं याचकः केवलं त्वा-
मिति न च कथयामि ज्ञातदेवप्रभावा।
शिशुरसि हि शरीरे किन्तु कस्यैव हेतो-
र्धृतमनुजशरीरं वेत्ति कस्ते स्वरूपम् ॥९३॥

शमयसि भवतापं ध्यानतः केवलं त्वं
ह्यपनयसि कलङ्कं वन्दनात्स्वे पदाब्जे ।
नयसि निजसकाशं कीर्तनादाह्वयानां
सुलभमपि किलैतन्मादृशा नाचरन्ति ॥९४॥

इह न भवसि चेति प्रोच्यसे नास्तिकैस्त्वं
प्रतिपदमनुभूतत्वत्कृपास्तेऽपि मूढाः ।
न विदुरपि भवन्तं स्वात्मसंस्थं नुदन्तं
प्रतिनिमिषमिहैव स्वीयकर्माणि गूढम् ॥९५॥

शरणमसि मम त्वं त्वां विनान्यं न जाने
मतिरसि मम माता त्वं पिता बांधवश्च ।
गुरुरपि च सखा त्वं ज्ञानमार्गोपदेष्टा
तदिह मधुमुरारे पाहि मां रामचन्द्र ॥९६॥

जन इति पुरुषं त्वां राम केचिद्वदन्ति
शिव इति च भजन्ते जन्तवः केचिदन्ये ।
परमपुरुषनाम्ना वेदवाण्यापि देव
त्वमिति बहुविधैर्वा गीयसे नामसङ्घैः ॥९७॥

विकसितनलिनाभे श्यामले श्रीनिधाने
पदनखसितशोभादीप्तभक्तोत्तमाङ्गम् ।
नलिनरपतिवन्द्यं योगिभिः पूजितं ते
सुरसरिदमलाम्बुव्याप्तमङ्घ्रिं नतास्मि ॥९८॥

भरतविनुतपादं भव्यमूर्तिं भवारिं
तिलकयुतललाटं मन्दहासाननाब्जम् ।
सुरपतिकृतकीर्तिं दुष्टमत्तेभसिंहं
शिरसि निहितहस्ता भक्तियुक्ता नमामि ॥५९॥

मुनिजनभयभिन्नं मित्रवंशप्रदीपं
ह्यमरमजरमीशं दिव्यकोदण्डपाणिम् ।
ज्वलनरुचिममानं कुण्डलोद्दीप्तकर्णं
सुभगतनुभुजं त्वां लोकये दीनबन्धुम् ॥६०॥

शरवरहतरक्षःकोटिमर्धेन्दुभालं
वरदमरिदवाग्नेः शीतलाम्बुप्रवाहम् ।
मुकुरनिभकपोलं शङ्करं साधुवन्द्यं
विमलचरितमार्यं त्वां प्रपद्ये शरण्यम् ॥६१॥

दशरथवरपुत्रं लक्ष्मणेनानुयातं
खरकरविधुनेत्रं सर्वभूताधिनाथम् ।
अगणितगुणपूर्णं भाग्यदं भाग्यवन्तं
विकसितनवमल्लीपुष्पदन्तं प्रणौमि ॥६२॥

धृतदुरितकलङ्का रामचन्द्र त्वदीयं
चरणकमलयुग्मं सानुतापा नमामि ।
तदपनय ममाघं भूरिकारुण्यमूर्ते
न हि न हि परमत्वात्त्रातु पापं चरामि ॥६३॥

रघुतिलक न जाने त्वां कथं प्रीणयामि
प्रणतिभिरथवेति स्तोत्रसद्वैर्वरेण्यम् ।
किमपि वचनवृन्दं प्रोद्गतं कालयोगा-
त्तव चरणतलेऽहं हर्षचित्ता ददामि ॥६४॥

इति वचनमुदीर्य प्रेयसी गौतमर्षेः
सजलनयनपद्मा रामचन्द्राङ्घ्रिपद्मम् ।
निजभुजयुगबद्धं सा चकाराश्रुसिक्तं
परमशुभकरं तत्को महात्म्यमेसंस्यम् ॥६५॥

तदनु मुनिपपत्नी वन्दनं सा समाप्य
चरणयुगलपूता तत्र भाता चकाशे ।
शरदि नभसि शुभ्रा पूर्णचन्द्रप्रभेव
दिशि दिशि निजकान्ते रश्मिजालं प्रसार्य ॥६६॥

विकसितशतपत्रा पद्मिनी पङ्कमध्या-
न्मुनिवरदयिता सा चोद्गता भूमिगर्भात् ।
उदितकनकवल्ली मेघमध्यात्तथैव
द्युपलतनुमपास्य ह्लादिनीवोद्गता वा ॥६७॥

पुनरपि पतियोग्या दुर्निरीक्ष्या निलिम्पै-
र्मुदितवदनलक्ष्मीः सातिथेयी बुभूषुः ।
कुशिकजमपि रामं लक्ष्मणं चाश्रमं स्वं
मधुरतमवचोभिश्चाजुहावेव वह्नीन् ॥६८॥

ऋषिवररमणीं तां तावहल्यां कुमारौ
नयविनयविधिज्ञौ नेमतुः सादरञ्च ।
कुशिककुलवरेण्यश्चापि शीर्षप्रकम्पा-
द्विधुतदुरितसङ्घां भूरि मेने प्रणम्राम् ॥६९॥

गतकलुममरेशं गौतमामर्षयोगा-
दकृतसुरवरकार्यं शोकतप्तं निशाम्य ।
वृषणमपि विधाय स्वीयनेतारमेव
प्रययुरथ पितॄंस्ते निर्जरास्तस्य भूत्यै ॥७०॥

पुनरधिगतवीर्यं जिष्णुमभ्रेर्वचोभि-
र्झटिति च पितृदेवा वासवं तं वितेनुः ।
सुरपतिरपि नाम्ना मेषबीजो बभूव
मुनिरपि स जगाम क्ष्माधरेन्द्रं क्षमावान् ॥७१॥

निगदितवति सम्यक् कौशिके वृत्तमेवं
नृपतनुभवराभ्यां प्रादुरासीत्प्रतीच्या ।
अपि स मुनिवरेण्यो गौतमश्च स्वदृष्ट्या
शुचिविलसितदेहां प्रेयसीमाशु मत्वा ॥७२॥

तपसि महति तप्तं देहभासं वहन्तं
मुखचिबुकविभागे श्मश्रुराभिप्रदीप्तम् ।
असितहसितभालं यज्ञसूत्रेण कान्तं
ददृशुरिव मुनिस्थं गौतमं लोकबन्धुम् ॥७३॥

चिरपरिचितमात्मस्नेहपूर्णं पवित्रं
झटिति कुशिकजन्मा प्रत्यगच्छन्मुनीन्द्रम् ।
निजभुजयुगपाशे हर्षवर्षी बबन्ध
परिचितमिव कर्तुं चात्मनस्तेजसापि ॥७४॥

पुनरपि चिरकालानन्तरं वीक्षमाणा
परमरुचिमहल्या रामकारुण्यपूता ।
पतिचरणमथैषा तत्र शीघ्रं पपात
कमलकुसुममध्ये षट्पदालिर्यथैव ॥७५॥

तदनु दनुजशत्रू शत्रुनाशैकवीरौ
दशरथनृपहर्षोत्कर्षहेतू कुमारौ ।
अपि मुनिवरपादौ नेमतुः कौशिकाक्षि-
प्रविचलनकृताज्ञौ पण्डितावस्त्रशास्त्रे ॥७६॥

उचितममलकीर्तिर्गौतमः प्रीतिवाक्यं
प्रवरमवददार्यं कौशिकं तापसानाम् ।
अपि कुशलमपृच्छच्चाश्रमे सिद्धसंज्ञे
तपसि कथमितीव प्रश्नमस्तेऽप्यनिन्द्यः ॥७७॥

रघुवर तव तातश्चक्रवर्ती नगर्यां
वसति सुखनिमग्नः कच्चिदप्यस्ति तस्य ।
सचिवमतिविमाता भूधुरा धर्मपूर्णा
विविधविदिति महर्षिः पृष्टवान् रामचन्द्रम् ॥७८॥

जयतु रघुवरेण्य त्वत्कृपा सर्वदिक्षु
प्रभवतु जयघोषः सर्वदा ते कुमार ।
त्वयि भवति विदूरे कुत्र चास्मद्विधाना
मनसि तपसि वृत्तिर्विघ्नहीना समग्रा ॥७९॥

अणोरणीयान् महतो महीयान् श्रीरामचन्द्रः परमात्मरूपी ।
त्वमस्यहल्येऽस्य पदारविन्दादपांसुला चार्हसि मां समेतुम् ॥८०॥

उक्त्वेति भार्यां रघुनाथपादस्पर्शप्रपूतां मुनिपुङ्गवस्ताम् ।
रामावतारं जगदेकदेवं चकार दिव्यस्तुतिहृष्टमित्थम् ॥८१॥

नमोऽस्तु ते राघववंशकेतो मारीचनीचघ्न सहस्रहस्तः ।
ममापि पूर्वार्जितपुण्यहेतोरसि प्रसन्नो मयि देवदेव ॥८२॥

चतुर्मुखाद्वेदविदां वरिष्ठ प्रकम्पिनान् कैटभदानवेन ।
वेदान् समुद्धर्तुमभूस्त्वमेव प्रभो महामत्स्यशरीरधारी ॥८३॥

पयःसमुद्रे मथिते सुधार्थे सुधाशनैरप्यरिभिः सुराणाम् ।
गतेऽचले मन्दरनाम्नि नीरे तदाभवस्त्वं किल कूर्मकायः ॥८४॥

वसुन्धरामुच्च बलेन कृष्टां यदा हिरण्याक्षमहासुरेण ।
महावराहो नु भवान् प्रभो तां मुन्वोद्धाराय नमोऽस्तु तुभ्यम् ॥८५॥

भक्ताग्रगण्य त्वयि दत्तचित्त प्रह्लादम् ह्लादयितुं [illegible] ।
नृसिंहरूपेण भयङ्करेण क्षणाद्धिरण्यं विनरं त[illegible]यम् ॥८६॥

बलिं नृपं वामनरूपधारी भूत्वा त्रिपद्धि [illegible] ।
भयानपायेन जगत्त्रयं च त्रिविक्रमाकार[illegible] युगाभवस्त्वम् ॥८७॥

त्रिःसप्तकृत्वः परशुं हि धृत्वा रामाभिधानो जगतीतलेऽस्मिन् ।
राजन्यवंशान् जमदग्निसूनुर्भूत्वाथ वंशानिव चाच्छिनस्त्वम् ॥८८॥

त्वमद्य काकुत्स्थकुलप्रदीपो रामोऽभिरामो रमसे जगत्याम् ।
स एव साक्षात्खलु राक्षसानां नाशाय जातस्त्वमसीत्र विष्णुः ॥८९॥

युगे तृतीये वसुदेवपुत्रः कृष्णश्च भूत्वा भुवनस्य भारम् ।
हरिष्यसि त्वं हरिरेव साक्षाल्लीलां वितन्वन् रमणीयशीलाम् ॥९०॥

पश्चात्प्रबुद्धः खलु बुद्धनाम्ना भूमौ कृपां भूरि करिष्यसि त्वम् ।
भवन्ति सर्वे कृमिकीटमुख्या ये प्राणिनस्तेऽपि कृपाभिपूताः ॥९१॥

कलौ युगे कृष्णतुरङ्गपृष्ठे स्थित्वापि नीलासिलतां गृहीत्वा ।
म्लेच्छप्रणाशं हि करिष्यसि त्वं सतां सुखं भूमितले प्रसार्य ॥९२॥

दशावतारानिति राम कृत्वा लोकत्रयस्योद्धरणाय दैत्यान् ।
निहंसि, लीलामनुजस्वरूप प्रणामकोटिं वितनोमि तुभ्यम् ॥९३॥

सन्तो यदा स्युर्भुवि भूरिदुःखे तदा चिदानन्द कृतावतारः ।
निःशेषमेतान् हतदुःखपीडान् कृत्वा किल स्थापयसीह धर्मम् ॥९४॥

धनार्जने वाथ यशोऽर्जने वा स्थितं निजोत्साहमरातिभीष्म ।
सुपं; विभज्यार्थमिहैव दत्वा तवार्चने सन्ति जना विमुक्ताः ॥९५॥

मूढा जनास्ते तव मार्गणाय प्रयान्ति तीर्थानि च ये गिरीन्द्रान् ।
किं ज्ञानहीनेन वृथाटनेन त्वं दृश्यसे देहगृहे स्वकीये ॥९६॥

न तुष्यसि त्वं कठिनव्रतैश्च वेषैर्बलात्कारधृतैस्तथा वा ।
किन्त्वन्तरात्मा भरितश्च येषां प्रेम्णाभि तेषां हृदये विशुद्धे ॥९७॥

इत्यादिभिस्तं वचनैर्महर्षी रघुप्रवीरं मुदितं चकार ।
दत्वा सपर्यामखिलामथासै प्रभूतमानन्दमवाप चित्ते ॥९८॥

सतीमहल्यां पुनरेप लब्ध्वा रामाङ्घ्रिधूलीकणपूतदेहाम् ।
निजाश्रमे स्वस्थमनाश्चकार वासं वसानोऽजिनवाससी च ॥९९॥

गन्धर्वास्त्रिदशाश्च दिव्यनिनदैः सङ्गीतमानन्ददं
नाट्यं चक्रुरमर्त्यलोकगणिका रम्भादयो व्योम्नि च ।
श्रीलक्ष्मा निपपात पुष्पनिकरो मुन्याश्रमे राघवो
लक्ष्मीवान् सह लक्ष्मणेन मिथिलामुल्लासपूर्णो ययौ ॥१००॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

इति श्रीसीतास्वयंवरे महाकाव्ये श्यङ्के

॥ अहल्योद्धरणं नाम ॥

॥ एकादशः सर्गः ॥

श्रीः

॥ द्वादशः सर्गः ॥

## ॥ मिथिलाप्रवेशः ॥

अनन्तगुणपूर्णोऽपि रामचन्द्रः सलक्ष्मणः
अनुसृत्य मुनिं किञ्चिदवाप मिथिलां पुरीम् ॥१॥

ददर्श दर्शनीयां तां जनकेन सुपालिताम् ।
राजर्षेः प्रीतिदां प्रीतिपात्रं पत्नीमिव स्थिताम् ॥२॥

विशालां विशदामिख्यां विश्वप्रेमकरीं शिवाम् ।
रामो रामाभिरामां च ध्वंसिनीं सकलापदाम् ॥३॥

राजवीथीषु यत्रासौ कौसल्यानन्दवर्धनः ।
ददर्श पादपान् वृद्धान् पथिकश्रमहारिणः ॥४॥

गच्छन्तः पथि दृष्ट्वामुं रामं राजीवलोचनम् ।
आसंश्चित्रार्पितारम्भा नागरा मिथिलापुरे ॥५॥

स्वभावभीरवो यत्र धनुष्पाणी रघूद्वहौ ।
हरिण्यश्चञ्चलैर्नेत्रैर्दृष्ट्वा दुद्रुवुरञ्जसा ॥६॥

दूरं गत्वा पुनस्तास्तु पश्यन्त्यस्तापसोत्तमम् ।
आजग्मुर्निकटं तेषामथ निर्गतसाध्वसाः ॥७॥

बालौ हर्षप्रकर्षेण ननन्दतुरनेन तौ ।
सर्वदाज्ञातदुःखेह बाललीला मनोहरा ॥८॥

शशास शासनैः सुष्ठु मिथिलां मिथिलाधिपः ।
बभूव भूः सकान्ता च प्रजाः सजनका अपि ॥९॥

काले ववर्ष पर्जन्यस्तस्मिन् राजनि शासति ।
तत्राजनि न बाधा तु मा बाधा बाधिताभवत् ॥१०॥

नार्यो नाधर्ममार्गेषु विचेरुः पुरुषास्तथा ।
ताः पातिव्रत्यसंपूर्णाश्चैकपत्नीव्रतास्तु ते ॥११॥

*विद्याभिवृद्धये तत्र प्रजानां हितकारिणः ।*
बभूवुर्गुरवोऽज्ञानध्वान्तदीपाः सहस्रशः ॥१२॥

क्षत्रियाणां धनुःशास्त्रसदभ्यासाय पत्तने ।
तस्मिन्नकारि सर्वाणि साधनानि महीभृता ॥१३॥

लेभेऽभिवृद्धिं सङ्गीतं तद्विद्भिः पठितं पुरे ।
सम्यक् चकार गोष्ठीषु प्रजानां मुदमञ्जुनाम् ॥१४॥

कला वेदान्तविद्याश्च याश्चान्या भुवि सन्ति ताः ।
समृद्धिं लेभिरे सर्वाः सर्वज्ञे शासति प्रभौ ॥१५॥

राजदण्डः करे राज्ञो भूषणं केवलं बभौ ।
अपराधी न कोऽप्यासीज्जनके शासति प्रजाः ॥१६॥

यशःसंकीर्तनं चक्रुर्जनाः सर्वे च राघवौ ।
तच्छुश्रुवतुरुद्भूतं हृदयात्र मिथः प्रभोः ॥१७॥

करेण करुणासिन्धुः प्रजादत्तेन रक्षणे ।
तासां बभूव निरतो मुग्धामृतसस्यशालिनी ॥१८॥
कविवाणीषु वीणां वा वादयन्ती सरस्वती ।
उवास वासवारामलसितोपवने पुरे ॥१९॥
कोशगेहे महीपस्य नगरारामराजिषु ।
वनितासु चकाशापि पुरे श्रीर्वासमात्मनः ॥२०॥
देवालयाश्चित्रभित्तिसहिता मिथिलापुरे ।
शिल्पिनां दर्शयन्ति स्म कौशलं कृतिसंचये ॥२१॥
भित्त्यर्पितानि चित्राणि यत्र तद्वासिनामपि ।
जनानां चक्रुराश्चर्यं सजीवभ्रान्तिमेव च ॥२२॥
भक्तिमार्गावलम्बी स राजा तद्वत्प्रजा अपि ।
विग्रहाः केवलं नोषुः सप्राणास्तत्र देवताः ॥२३॥
पर्णशाला महर्षीणां तत्रासन्नभितः पुरम् ।
यास्वभावात्पुरविना विघ्नं ह्यात्मारामा महर्षयः ॥२४॥
सरांसि यत्र राजन्ते राजहंसयुतानि च ।
सजलानि सपद्मानि चित्तहारीणि केवलम् ॥२५॥
विश्वविद्यालये यत्र समागत्यान्यदेशतः ।
गुरूणामन्तिके शिष्याः पठन्त्येकाग्रमानसाः ॥२६॥
संस्कृतां भारतीं यत्र पूर्वसंस्कारहेतुना ।
अधिगच्छन्ति विज्ञानं ज्ञानं चैव तथा प्रजाः ॥२७॥

परस्परसमालापमाधुर्यरसरञ्जितौ ।
राघवावन्वयातां तं मुनीन्द्रं कुशिकोद्भवम् ॥२८॥

ज्ञात्वागतं मुनीन्द्रं स राजा राजसुपूजितः ।
जितेन्द्रियो जितक्रोधं प्रत्युद्यातुमथाययौ ॥२९॥

ब्रह्मर्षिमथ राजर्षि सामात्यः सपुरोहित ।
दृष्ट्वा दूराच्चकारासे साष्टाङ्गप्रणतिं तत ॥३०॥

कुशलं कुशिकानन्दहेतुः पप्रच्छ भूपतिम् ।
शतानन्दभरेणापि शतानन्दं च ऋत्विजम् ॥३१॥

उचितानर्घ्यपाद्यादीनतिथिभ्यो ददौ नृपः ।
पश्चात्सुवर्णपीठानि सर्वेभ्यश्च समृद्धिमान् ॥३२॥

यथाविधि समभ्यर्च्य राजर्षिरतिथींस्ततः ।
साञ्जलिर्भक्तिभावेन कौशिकं वदति स्म सः ॥३३॥

श्रेष्ठो भाग्यवतामस्मि दर्शनाद्भवतो मुने ।
यतो भवान् यज्ञकर्मदीक्षितं ह्यागतोस्ति माम् ॥३४॥

कावेतौ मुनिशार्दूल कुमारौ कथयाद्य मे ।
यौ हरेते मनोऽज्ञातौ बान्धवाविव सुन्दरौ ॥३५॥

श्रुत्वैतद्वचनं राज्ञः कौशिकः प्रत्यभाषत ।
श्रीरामकीर्तनं कर्तुं सदासौ बद्धकङ्कणः ॥३६॥

राजर्षे शृणु रामस्य चरितं सत्कुतूहली ।
यदि त्वं कथयाम्यद्य दिव्यं वर्णरसायनम् ॥३७॥

श्रूयते ननु राजेन्द्र राजेन्द्रालङ्कृतं कुलम् ।
यस्यादिर्भगवानेव कर्मसाक्षी बभूव हि ॥३८॥

मनुस्तस्मादभूद्राजा मानवान्वयकीर्तिदः ।
धर्मशास्त्रप्रणेता च जीवत्यद्यापि यो भुवि ॥३९॥

मान्धाताथ विधातेव कृतालङ्कारसन्निभः ।
ततोऽभूल्लोकविख्यातविक्रमः क्रमविद्वरः ॥४०॥

कश्चित्तत्कुलजो राजा शिबिर्नाम महायशाः ।
कपोतशिशुरक्षार्थं पलं प्रादात्स्वकायतः ॥४१॥

सगरः सागराभिख्यः शतक्रतुनिभः स्वयम् ।
शतं चकार यज्ञानां लेभे लोकोत्तरां गतिम् ॥४२॥

भस्मीकृतान् सुतांस्तस्य कपिलेन महाबलान् ।
भगीरथो वियद्गङ्गां पवित्रीकर्तुमानयत् ॥४३॥

दिलीपः कुलदीपोऽथ बभूव वशिनां वरः ।
शमनं राजेन्दुना येन शत्रुध्वान्तं विनाशितम् ॥४४॥

यः पुनर्नन्दिनीधेन्वाः सेवया भक्तिपूर्णया ।
हर्षयित्वा हि तां लेभे कुमारं कुलवर्धनम् ॥४५॥

स कुमारो रघुर्नाम शक्रमप्यात्मविक्रमात् ।
चकार साध्वसाश्चर्यपूरितं बलविद्विषम् ॥४६॥

सर्वासु दिक्षु चक्रे स भूमण्डलजिगीषया ।
नृपानात्मबलोत्कर्षात्पतितान्पदपङ्कजे ॥४७॥

त्यागी कौत्साय राजन् स ददौ कौबेरकोशतः ।
तद्गुरोर्दक्षिणायैवाभ्यर्थिनेऽपार्जितं धनम् ॥४८॥

सुतस्तस्याभवद्धीमानजः सुन्दररूपवान् ।
वृणोतीन्दुमती यं स्म वैदर्भी च स्वयंवरे ॥४९॥

तस्य पुत्रः प्रियो राजन् राजा दशरथोऽधुना ।
अयोध्याया भवानत्र, यथा शास्ति तथा प्रभुः ॥५०॥

तिस्रः कान्ता नृपेन्द्रस्य तस्य सन्ति पतिव्रताः ।
कौसल्या कैकयी चैव सुमित्रा वत्सलास्तथा ॥५१॥

पतिव्रतासु भूमीन्द्रो गुणपूर्णासु तास्वपि ।
पुत्रं कुलकरं नाप्नोदृणत्रयहरं चिरम् ॥५२॥

स कृत्वा पुत्रियामिष्टिमृष्यशृङ्गमहर्षिणा ।
सह विष्ण्वंशसम्भूतं लेभे सुतचतुष्टयम् ॥५३॥

राजन् तव पुरस्थं हि रामं राजीवलोचनम् ।
कौसल्या सुषुवे राज्ञी पूर्णेन्दुमिव पौर्णिमा ॥५४॥

कैकेयी भरतं राज्ञी सुषुवे सुन्दरं सुतम् ।
पुरा कैलासशिखरे कुमारमिव पार्वती ॥५५॥

सुमित्रा नन्दनौ वीरावसूत युगपत्ततः ।
अमूल्यौ रत्नगर्भेव मणिश्रेष्ठौ स्फुरद्द्युती ॥५६॥

तौ हि लक्ष्मणशत्रुघ्नौ नाम्नाख्यातावरिन्दमौ ।
रूपशौर्यार्यशीलाढ्यौ सुन्दरौ लोकरञ्जकौ ॥५७॥

राममक्ताग्रणी राजन् लक्ष्मणोऽनुप्रयाति तम् ।
सर्वकालेषु लक्ष्मेव चन्द्रं छायायथा नरम् ॥५८॥

मयायाचि नृपालः स रामचन्द्रं महाभुजम् ।
मारीचादिमहानीचहृतयज्ञेन दुःखिना ॥५९॥

वसिष्ठदत्तधैर्योऽपि राजा दशरथोऽथ तौ ।
कुमारौ प्रेषयामास मया सममरिन्दमौ ॥६०॥

सिद्धाश्रममनुप्राप्य मम बालावपि प्रभो ।
पालयामासतुः सुष्ठु यज्ञं सप्तदिनानि च ॥६१॥

जघानैकेन बाणेन शस्त्रविद्याविचक्षणः ।
सुबाहुं दीर्घबाहुः स रामो राक्षसनायकम् ॥६२॥

मारीचोऽपि कुमारेण विसृष्टेन सरस्वति ।
पवनास्त्रेण वेगाच्च निरपात्यसुराधमः ॥६३॥

न केवलं नरं बालमेनं विद्धि महीपते ।
असौ साक्षाद्धृषीकेशो जातो दैत्यवधाय च ॥६४॥

समाप्तितेऽथ यज्ञे मे भवदाह्वानमागतम् ।
प्रतिमान्य तदेवाहमागतः सहराघवः ॥६५॥

सोऽपि वीराग्रणी रामो द्रष्टुकामः स्वयं नृप ।
अमोघं ते धनुः शैवं तद्दर्शयितुमर्हसि ॥६६॥

अधुना निजपादाभ्यामहल्यां गौतमप्रियाम् ।
पूतां कृत्वा पुरं रामत्वागतस्ते सलक्ष्मणः ॥६७॥

इदं वर्णामृतं राजा जनको दयया मुनेः ।
पीत्वा स्वर्गसुखं लेभे क्षणमेकं सुदुर्लभम् ॥६८॥

मातरं परिशुद्धाङ्गीं विज्ञाय वचनान्मुनेः ।
गौतमस्य सुतो ज्येष्ठो गिरमेवमभाषत ॥६९॥

मुने श्रुत्वाहमधुना मधुना वचसा तव ।
सानन्दो स्वप्रसूमसि शतानन्दो ध्रुवं ननु ॥७०॥

राममिन्दीवराभासं सानुजं हर्षदायकम् ।
मातुर्मे मुक्तिदं दृष्ट्वा रोमहर्षं गता तनुः ॥७१॥

गुरोर्मे कुशिकानन्द नन्दत्वाश्रमसुस्थली ।
रामकारुण्यसंप्राप्तपुनर्मन्मातृसङ्गमा ॥७२॥

पवित्रतममद्याहं मन्ये स्वजनकाश्रमम् ।
रामपादसरोजातरजोनिर्धूतकिल्बिषम् ॥७३॥

पूजा रामस्य किं मात्रा कृता भक्तिपुरस्सरा ।
गुरुणा किं गुणे तेन सत्कृतः स महाप्रभुः ॥७४॥

इत्युक्त्वा स शतानन्दो विश्वामित्रं यथाक्रमम् ।
प्रत्युक्तस्तेन वाक्यज्ञं राममूचे सलक्ष्मणम् ॥७५॥

भाग्यवन्तौ कुमारौ वां मन्ये भुवि महावटौ ।
यतो युवां मुनिश्रेष्ठपासान्तामिमं गुरुम् ॥७६॥

यस्य शुभ्रा प्रभा कीर्तेर्व्याप्नोति हरितः शुभाः ।
यं श्रुत्वापि मदमत्तः शक्रोऽन्तःशङ्कते भृशम् ॥७७॥

अपरः सृष्टिकर्तेव यो महात्मा विराजते ।
अमेयमहिमा राम चाग्रयायी महौजसाम् ॥७८॥

शृणु चावहितो राम यदि त्वं कुतुकी कथाम् ।
तस्येमाममेयस्य कौशिकस्य महात्मनः ॥७९॥

रामः कथां कुशिकवंशवरस्य पश्चा-
च्छ्रोतुं मुखाज्जनकराजपुरोहितस्य ।
सज्जोऽभवत्तदनु सोऽपि गिरा महत्या-
प्यर्थश्रिया रुचिरवाक्यसमन्वयोचे ॥८०॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

इति श्रीसीतास्वयंवरे महाकाव्ये श्र्यङ्के

॥ मिथिलाप्रवेशो नाम ॥

॥ द्वादशः सर्गः ॥

श्रीः

## ॥ त्रयोदशः सर्गः ॥

## ॥ कौशिकमाहात्म्यम् ॥

---

प्रजापतेरात्मभवो महात्मा बभूव भूरक्षणकर्मदक्षः ।
कुशाभिधानः कुशनाभनाम्ना सुतेन योऽभूच्च कुमार पुत्री ॥१॥
अयं महात्मा तपतां वरिष्ठ पुराभवत्तस्य सुतस्य सूनु ।
उवाह राज्यस्य धुरं धुरीणो ह्यनेकवर्षाणि नृपप्रवीरः ॥२॥
प्रदक्षिणीकर्तुमथैकदा नौ भुवं ययौ सूरिबलेन सार्धम् ।
ददर्श मार्गे शुचिदीप्तभागं वसिष्ठदिव्याश्रममेव राम ॥३॥
क्वचित्समन्तादथ विप्रवृन्दं क्वचिच्च कृष्णाजिनवल्कलानि ।
कमण्डलुं कुत्रचिदेव दृष्ट्वा कुमार संप्राप मुदं महीपः ॥४॥
तृणाशनास्तत्र कुमार केचित्तदाश्रमे वातमयो विनेतुः ।
तथापरे मारुतभक्षणाश्च फलाशनाः केऽपि जलाशनाश्च ॥५॥
क्वचित्स ध्यानमनाश्रयस्थं गणं मुनीनां क्वचिदेकपादम् ।
क्वचिद्द्रुनाम्यं क्वचिदग्निमध्यं ददर्श धीमान्स्थितं समाधौ ॥६॥
निमीलिताक्षं क्वचिदेव राजा सरोमकन्धुद्युतिरत्तनेत्रम् ।

क्वचिज्जटाबद्धशिरःप्रदेशान् गजाजिनालङ्कृतदेहमध्यान् ।
सिताक्षमालावृतकण्ठभागान् ददर्श रुद्रानिव रामचन्द्रः ॥८॥
जटीकृतास्तापसकेशपाशाः कुमार तत्रानिलकम्प्यमानाः ।
फणासमेताहिवरोपमानं श्रिया समूहश्च नृपेण दृष्टः ॥९॥
स तापसानां दयिताभिरेव प्रवर्धितं नीरनिषेचनेन ।
प्रसूनमालाभिरलंकृतं च महीरुहाणां निचयं ददर्श ॥१०॥
शुका महर्ष्याश्रमवासहेतोरधीत्य वाक्यानि यथास्वरं ते ।
गिरा मनोरञ्जनशक्तयैनं पुनः पठित्वा मुदितं च चक्रुः ॥११॥
स पर्णशालामभितो ददर्श कुरङ्गशावानथ धेनुवृन्दम् ।
मयूरमालाश्च विचित्रवर्णा मुदा पपौ नेत्रपुटेन रामः ॥१२॥
घटं जलेनाथ तडागमध्यात्प्रपूर्य दिव्याश्रमबद्धदृष्टि ।
नृपालवर्यः स ददर्श वृन्दं श्रमोदकोसिक्तमुखं वधूनाम् ॥१३॥
नृपं विदित्वा निजपर्णशालासमीपसंस्थं सबलं वसिष्ठः ।
यथाविधि प्राग्रहरो मुनीनां ददौ समूलानि फलानि तस्मै ॥१४॥
विधिप्रवीणो विधिमनुरस्मै विधाय पूजां विधिवत्तमेव ।
अनामयं पृच्छति भूपतिं स्म विधिः किलाभ्यागतपूजनेयम् ॥१५॥
नृपाय पश्चान्मुनिसत्तमोऽसौ कैयजितपद्धाञ्छितमात्मनो मे ।
बलस्य सर्वस्य तवेति राजन् स्पृहास्ति चातिथ्यपरिग्रहाय ॥१६॥
वदन्तमेनं बहुशोऽपि मेति प्रभुं चमत्कारगिरा चकार ।
मुनिः स्वपत्न्यै च प्रागतं तं प्रसृत्य पत्न्याश्रमपङ्क्तीनाम् ॥१७॥

विधाय चैवंविधमात्मवाण्या नृपं विधेरात्ममनोऽतितुष्टः ।
समाजुहावाखिलकामदात्रीं समादिदेशातिथिपूजनार्थम् ॥१८॥

तथेति धेनुः शबला वसिष्ठं मुनिं समापृच्छ्य ययौ मुहूर्तात् ।
चकार भक्ष्यं विविधं बलेभ्यो जनेश्वरस्यामिनवं रसेन ॥१९॥

वटस्य पर्णेषु निवेशितानि तपोधनानां तनयैः कुमार ।
प्रजाधिनाथानुचरास्तदीये ह्यदन्ति भक्ष्याणि मुदाश्रमे स्म ॥२०॥

कुमार गाधेस्तनयो वसिष्ठादशेषपूजां विधिवत्प्रगृह्य ।
अमेयशक्तिं च निशाम्य धेनोर्ययौ न तां तत्र विहाय राजा ॥२१॥

यथा यथा धेनुमयाचतासौ तथा तथा तां न ददौ वसिष्ठः ।
शशाक वित्तेन गजैर्हयैर्वा नृपश्रिया तोषयितुं तमेषः ॥२२॥

ततो वसिष्ठो निजगाद भूपं तमेवमीषद्विहसन् मुनीन्द्रः ।
समीक्ष्य तस्या ग्रहणे कथंचित्कृतोद्यमं सार्थमिदं च वाक्यम् ॥२३॥

इयं महीपाल ममास्ति सर्वं धनं तपः कीर्तिचयः सुखं च ।
करोमि यज्ञं च तपश्चरामि प्रभो सजीवोऽहमिहानयैव ॥२४॥

पयःप्रदानाच्च ममैव माता पितेव मे कामितदानहेतोः ।
स्वसेवया भक्तिममेतयैषा सुतेव मां रक्षति कामधेनुः ॥२५॥

तदेव राजन्न ददामि धेनुं प्रियङ्करीं माग्यरमास्वरूपाम् ।
मयि प्रभो जीवति जीवितेशामिमां न शक्नोषि नृप ग्रहीतुम् ॥२६॥

इति प्रजानामधिपो महर्षेर्निशम्य वाणीं विफलप्रयत्नः ।
रुषा पुरादष्टवसिष्ठशक्तिः समादिदेश ग्रहणं च धेन्वाः ॥२७॥

ततः समीपं तु समेत्य धेन्वा नृपाज्ञया तां चक्रुर्भटाश्च ।
अजानती गौः करणीयमेषा जगाम शीघ्रं मुनिसन्निधिं हा ॥२८॥
किमेतदेते नृपकिङ्करा मां प्रभो प्रकर्षन्ति बलाद्धलिष्ठाः ।
ममापराधः क इहास्ति देव त्वमेव मे पालक इत्युवाच ॥२९॥
मुनिः सबाष्पां शबलां निशाम्य प्रभूतकारुण्यनिधिर्जगाद ।
नृपो न जानाति तवाप्रमेयं बलं निदर्श्यैव जय त्वमद्य ॥३०॥
ययौ महर्ष्युक्तिसमेधितात्मशक्तिर्बलं यत्र नृपस्य धेनुः ।
निजं शरीरं दुधुवे च पश्चादनायतानेकभटा हि सेना ॥३१॥
जनाः सशस्त्राः शबलाशरीरात्समुद्बभूवुः सबला नृपस्य ।
बलं सहुङ्काररवाः क्षणेन क्षतं समाचक्रुरचेतनं च ॥३२॥
वसिष्ठधेन्वङ्गजमेष राजा बलं ददर्शामितशक्तिपूर्णम् ।
कराङ्गुलिं प्राणतले निवेश्य प्रशंसति स्मात्मनि धेनुवर्याम् ॥३३॥
बलाभिघातेन बभूव तन्वी नृपस्य नाशा ग्रहणेऽपि धेन्वाः ।
परंतु तस्यां द्विगुणीकृताशो बभौ स नाश्चर्यमिदं कुमार ॥३४॥
रथं समारुह्य स मानवेन्द्रः ससर्ज दिव्यास्त्रचयं तदीये ।
बले शकम्लेच्छयुते बलिष्ठे यथाश्मवर्षं सुरलोकनाथः ॥३५॥
पुनर्वसिष्ठः स्वबलेन धेनुं प्रचोदयामास बलस्य वृद्ध्यै ।
तथेति सासूत सुवर्णदेहान् पराक्रमालङ्कृतबाहुयुग्मान् ॥३६॥
महानुभावान् सुरभिर्निजेभ्यः पुनः सहस्रं सुषुवेऽङ्गकेभ्यः ।
बभौ सपुष्पेव रघुप्रवीर प्रभाभिपूर्णा दिवि कल्पवल्ली ॥३७॥

यथा यथा भूरिबलेन राजा जघान तान् धेनुशरीरजातान् ।
तथा तथा ते व्यलभन्त वृद्धिं नृपोऽपि कोपस्य वशीकृतोऽभूत् ॥३८॥

जनेश्वरोऽपीश्वरचोदितोऽसौ निरर्थकं चेतसि चिन्तयित्वा ।
श्रमं स्वकीयं शरलाभहेऽथ प्रभुं जगन्नाथमगाच्छरण्यम् ॥३९॥

भवत्यदृश्या ननु कापि शक्तिर्यथान्धकारे नयतीह दीप्तिं ।
यथा हि संसारमहारिमध्ये मुहुःसहे भ्राम्यता भवामः ॥४०॥

तथैव कोपेन नृपः स नीतः प्रभञ्जनेनेव जलेषु कोलः ।
जगाम मुन्याश्रमनाशहेतोः प्रसादमीशस्य स लब्धुकामः ॥४१॥

कुमार कोपानलदग्धचित्तः सुबुद्धिवान् सज्जनपूजितोऽपि ।
विवेकशून्योऽभवदेष राजा दुराग्रहः सर्वविनाशहेतुः ॥४२॥

तपस्ततो राजकुमार राजा चकार गौरीपतितोषणार्थम् ।
भवोऽपि भूत्वा पुरतश्च तस्य ददावनेकास्त्रचयं सहर्षः ॥४३॥

स लब्धसर्वास्त्रचयो नृपालो जगाम पश्चाच्च मुमोच बाणान् ।
वसिष्ठदिव्याश्रमसन्निकर्षे प्रशान्तवातावरणार्दनार्थम् ॥४४॥

क्षणादमूद्राश्रमजीवितानां भयं भ्रमो दुःखमयार्तनादः ।
त्वमेव नः पालयितेति सर्वे विलप्य तं तस्य पदे निपेतुः ॥४५॥

नृपं स्वकीयाश्रमनाशहेतुं विशेषतः सज्जनपालकं च ।
पुरस्तपस्वी रथिनं हि दृष्ट्वा मिताक्षरामित्यमुवाच वाचम् ॥४६॥

नृपालकाः सज्जनरक्षणेषु त्यजन्त्यसून् भूमितले सदैव ।
तथापि निष्कारणमद्य राजन् ममाश्रमं नाशयसीति चित्रम् ॥४७॥

अहं सलज्जोऽद्य भवामि राजन् मम त्वया संलपितुं च नेच्छा ।
स्वतेजसा त्वामतिरंहसाहं जयामि सास्त्रं सबलं नृपालम् ॥४८॥
स किञ्चिदुक्त्वा तदनन्तरं नो पुरो विधायात्मकृतं हि दण्डम् ।
स्थितः समाधौ न ददर्श दृष्ट्या नृपं तमस्त्राणि किरन्तमारात् ॥४९॥
मुमोच वह्न्यस्त्रमथैन्द्रमस्त्रं स मानवं मोहनमेव पश्चात् ।
जवात्स दण्डो ग्रसते स्म सर्वं तरङ्गिणीतोयमिवाब्धिराजः ॥५०॥
प्रजापतेरात्मभवं प्रजानां पतिर्मुमोचास्त्रममोघशक्ति ।
प्रजापतेर्नामविवृद्धकीर्ति तदप्यमुद्दण्डवराहुतिश्च ॥५१॥
मुनिर्वसिष्ठोऽपि बभौ विशेषात्स्वकर्मणा तेन मधानकेन ।
प्रकाशते स्मापि भुवि प्रभूतं दिवाकरश्चण्डकरो यथैव ॥५२॥
जितं वसिष्ठेन जितात्मनेत्थं स राघवात्मानमिलाधिनाथः ।
निरर्थकं क्षत्रबलं बलस्य पुरो द्विजश्रेष्ठमस्य मेने ॥५३॥
शमो हि सर्वार्थजयप्रदाता शमेन कोपाग्निरपि प्रशान्तः ।
शमेन हि ब्राह्मणतापसाद्या बलं सुखं मुक्तिमवाप्नुवन्ति ॥५४॥
धिगस्तु मे क्षत्रियजन्मनोऽपि प्रभूतसेनासहितस्य चापि ।
बलं यतस्तेन महर्षिणाहं क्षणेन चैकेन पराजितोऽस्मि ॥५५॥
तदेव भूत्वा द्विजसत्तमोऽहं निजेन तेजोनिकरेण जित्वा ।
तपःक्रियाभिर्विमलाभिरेनं ममाघसंघं क्षपयामि सर्वम् ॥५६॥
इति स्वचित्ते नु गुरुस्ततासौ मुहुर्विचिन्त्याभिययौ यथाशम् ।
सतीद्वितीयः स तया हि तत्राप्यसेव्यताहर्निशमेव भक्त्या ॥५७॥

प्रभौ नराणां प्रभया महत्या तपश्चरत्यात्मबलेन चोग्रम् ।
दिशो बभूवुर्विशदाः पृथिव्यां बभौ स मार्तण्ड इव द्वितीयः ॥५८॥

तपस्विनस्तस्य कुमार जज्ञे चतुष्टयं तत्र कुमारकाणाम् ।
वृतो बभौ तेन पिता यथा ते त्वयानुजातैश्च तवार्यवर्यः ॥५९॥

सहस्रसंवत्सरकालमेनं तपःसमाप्तौ स्थिरमाप वेधाः ।
ददौ स राजर्षिपदं च राज्ञे ययौ सुरैः साकमथ स्वलोकम् ॥६०॥

तुतोष राजर्षिपदेन नासौ महामतिर्ब्रह्मपदाभिलाषी ।
पुनस्तपस्तीव्रतरं गुणाढ्यः प्रचक्रमे कर्तुमहर्निशं सः ॥६१॥

शशास साकेतपुरं तदैव त्रिशङ्कुभूपः परवीरहन्ता ।
इयेष यो गन्तुममर्त्यलोकं मनुष्यगात्रेण कुलोद्भवस्ते ॥६२॥

गुरुं रघूणां रघुवंशमानो ययौ वसिष्ठं शरणं स धीमान् ।
न साध्यमित्याभणितोऽपि तेन जगाम तस्यात्मजसन्निकर्षम् ॥६३॥

सुतानवादीच्चतुरः स राजा भवद्भिराप्नोमि यथाभिलाषम् ।
तथा कुरुध्वं गुरुवर्यसूना· कृतार्थमेनं जनमद्य चैव ॥५४॥

पुरोधसः पुत्रा नृपस्य सरस्वतीं कोपकरीं निशम्य ।
त्वमद्य चण्डालतनुं लभस्व नृपेति शापं प्रददौ नतस्तान् ॥६५॥

महर्षिणा तेन न शक्यमेतत्कथं किलास्माभिरिहास्ति साध्यम् ।
पितास्मदीयोऽखिलशास्त्रवित्स सतां वरः सज्जनपूजनीयः ॥६६॥

सहामहे किं महनीयकीर्तेः पराभवं तस्य पितुः कदापि ।
यदीच्छसि प्राप्तुमहर्निशं त्वं सुखं पुरीं याहि सुखेन राजन् ॥६७॥

इतीरितोऽप्येष श्रुतेन तेन प्रभुर्न सन्तुष्टमना बभूव ।
महीश्वरा बद्धधियः क्रियासु त्यजन्ति नो ताः प्रहता अपीह ॥६८॥

क्षणे स तस्मिन् फलमेव लेभे स्वकर्मणो विप्रशुतेन शप्तः ।
वृथा भवेन्नैव कदापि राम तपोधनोक्तिर्भुवि दृष्टसत्त्वा ॥६९॥

तथापि राजा न निरस्तधैर्यो धुरं ह्यमात्येषु निवेश्य भूमेः ।
जगाम यत्रास महातपस्वी कुशाग्रबुद्धिः कुशिकात्मजातः ॥७०॥

महर्षिरस्पृश्यतनुं वहन्तं कराळरूपं करुणापयोधिः ।
गिरा मनोमञ्जुलया जगाद पतिं जगत्याः कृतुदत्तबुद्धिम् ॥७१॥

समारभस्व त्वमरिन्दमाद्य क्रतुं शरीरेण दिवं प्रयातुम् ।
भवाम्यहं यज्ञकृतौ पुरोधास्तपोबलेनेन्द्रमुखान् ह्वयामि ॥७२॥

फलाभिपूर्णानि भवन्ति राजन्नशेषकार्याणि विधिप्रभावात् ।
निदर्शयाम्यात्मबलं बलिष्ठं हतं बलं स्यान्निमिषेण दैवम् ॥७३॥

क्रियाप्रयत्नेष्वविधाय चित्तं वृथाभिनिन्दन्ति जना हि दैवम् ।
स्वपौरुषेणैव भवन्ति लोके नराः प्रसिद्धा नियतिं निहत्य ॥७४॥

सुरान् सुराणां भुवनं च सर्वं वनं च निर्मातुमहं निजेन ।
बलेन शक्तः किमु साध्वसेन प्रयोजनं विश्वमनाधिनाथ ॥७५॥

इति त्रिशङ्कुं द्विगुणीकृतात्मप्रमोदभारं वचसा विधाय ।
समादिदेशापि समस्तदिग्भ्यो द्विजान्समाह्वातुमथो कुमारान् ॥७६॥

समाययुः सर्वमहर्षिवृन्द्यं ववन्दिरे तं शिरसा तदाज्ञाम् ।
निशम्य तत्पुत्रमुखाज्जवात्ते समापुरा देशविदेशवासाः ॥७७॥

न तत्र यज्ञाय समागमिलंस्ते वसिष्ठपुत्रा विहसन्ति तं स्म।
सुतेभ्य एवं स निशम्य सर्वान् रुषा शशापात्मवचोद्धतांस्तान् ॥७८॥

महर्षिशापादभवत्कुमार शतं सुतानां श्वभक्षणाढ्यम्।
भिया ततस्तापसविप्रसङ्घस्तथेति यज्ञं तनुते स तत्र ॥७९॥

समाजुहावाथ सुरेशमुख्यान् सुरान् हविर्भोजनकारणेन।
न चाययौ कोऽपि हविर्ग्रहीतुं नृपं हि चण्डालमवेव मत्वा ॥८०॥

तदा स राजर्षिरमोघशक्तिर्व्यारोपयामास दिवं त्रिशङ्कुम्।
नृपोऽपि चोर्ध्वं सहसा जगाम यथा विमानो नवयन्त्रशक्त्या ॥८१॥

दिवं प्रपेदे तु सुरेश्वरेण कृतावमानो निपपात तस्मात्।
पतन् स चुक्रोश गिरा महत्या ह्यवाक्शिरा मामिति पाहि देव ॥८२॥

अधःपतन्तं नृपमार्तमेव ददर्श पश्चान्मुनिरेव राम।
ममर्ज तत्रापरमेव नाकं निधाय सप्तर्षिसमूहमन्यम् ॥८३॥

चकार मार्तं च सहस्रभानुं विधुं तथान्यं सहतारकं मः।
प्रचक्रमे स्रष्टुमथेन्द्रमुख्यान् सुरानहो शक्तिरहो तपस्वी ॥८४॥

बभौ महात्मा स महोज्ज्वलेन बलेन लोकं ह्यपरं सकोपः।
तपोधनः स्रष्टुमिवोद्यतश्च विधिर्हि साक्षादपरो यथैव ॥८५॥

तदा समागत्य सुरमर्त्यसङ्घा मुनीश्वराः प्राञ्जलयो महर्षिम्।
ययाचिरेऽमर्षविनिग्रहं तं त्वं महात्मन् शमयेति वाण्या ॥८६॥

कुशिकसुतवरेण्यो निर्जराणां प्रमाद-
स्त्रिदिवभुवनमन्यं भूमिपालाय चक्रे।

नृपतिरपि स तत्र श्रीयुतश्चार्कनारं
व्यतनुत निजवासं भासवामः स्वलोके ॥८७॥

विघ्नैर्नैवमसौ कुमार भूपतिः संपीडितः सत्वरं
हित्वाशाममिताशयापि सहितस्तां पश्चिमाशां ययौ।
तस्तु घोरतपस्तपोधनयुतश्चामन्त्र्य सर्वान् मुनीं-
स्तान्यज्ञाय समागतान् घटभवः श्रीमान्यमाशामितः॥८८॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

इति श्रीसीतास्वयंवरे महाकाव्ये श्यङ्के

॥ कौशिकमाहात्म्यं नाम ॥

॥ त्रयोदशः सर्गः ॥

श्रीः

## ॥ चतुर्दशः सर्गः ॥

# ॥ विश्वामित्रतपःसमाप्तिः ॥

---

तपसा स तपोवनाग्रयायी दिशमासाद्य जलेश्वरेण गुप्ताम् ।
अखिलं वनमाततान पूतं महतानन्दभरेण चाध्युवास ॥१॥

कतिचिद्दिवसानि कन्दमूलैः परिपक्वैः कतिचित्फलैश्च पर्णैः ।
कतिचित्पवमानभक्षणेन ह्युपवासैः कतिचिद्व्रतैः कठोरैः ॥२॥

विविधैरतिवाहयांचकार प्रभुरेवं शरदश्च भूरिसंख्याः ।
असुवृन्दमतीव पीडयित्वा हृदयाशां यतते स्म लब्धुमन्तः ॥३॥

चरतीति तपस्तपोवनेन्द्रे नगरं ते प्रशशास चाम्बरीषः ।
यशसा धवलीकृताखिलाशः सुरलोकं रघुनाथ वृत्रहेव ॥४॥

पशुमस्य जहार देवराजो यजमानस्य नृपस्य रामचन्द्र ।
स हि खिन्नमना ययौ वसिष्ठं शरणं तं शरणप्रदोऽपि राजा ॥५॥

मनुजं मनुजेश कर्मणस्ते कुरु शीघ्रं बलिमद्य याजकस्त्वम् ।
इति वाक्यमुदीर्य जोषमास प्रभुरप्येतदुदीरितं निशम्य ॥६॥

स तथेति गुरुं जगाद पश्चात्प्रययौ मानवमार्गणाय राजा ।
बलये स्वयमेव भूरिदानं प्रददामीति च पत्तनेषु शंसन् ॥७॥

तुरगानथ गोकुलं सुवर्णं ह्ययुतं दातु मना बभूव राजा।
किमपीह न राम भूरि मेने नररूपं पशुमेव लब्धुकामः ॥८॥
रघुवंशसुधाब्धिचन्द्र राज्ञे न ददौ कोऽपि पिता स्वकीयसूनुम् ।
सुखदाद्वह्नु मेनिरे जनन्यः पितरश्चापि धनात्सुतान् स्वकीयान् ॥९॥
न तु पूर्णमनोरथो नरेशः क्षमया क्ष्मामखिलां भ्रमन्नवाप ।
उटजं स ऋचीकतापसस्य प्रथितस्यापि सतीसुतैर्युतस्य ॥१०॥
न जहौ प्रथमं सुतं मुनीन्द्रः पितृमोक्षप्रदमेव वंशपालम् ।
तनयं न ददामि मे कनिष्ठं जननीति प्रभुवर्यमावभाषे ॥११॥
तदनु स्वयमेव तं द्वितीयस्तनुजो भूपतिमूचिवानितीव ।
न पितुः प्रियसूनुरस्मि राजन् जननी सापि जहाति मामनाथम् ॥१२
तदहं प्रिय एव ते भवामि क्षितिनाथासि पशुः कृतोऽस्तथापि ।
अनुयामि भवन्तमद्य सज्जस्त्वनुजानातु भवानिमं जनं च ॥१३॥
हसतात्ममुखेन रामचन्द्रो मुनये भूरिधनं ददौ हि तस्मै ।
कृतकृत्यतया बलिं नरं तं रथमारोप्य पुरं जगाम वेगात् ॥१४॥
रभसेन रथस्य भूमिपालो रमणीयां भुवमीक्षते स भूपः ।
दयितस्य पुरश्च सापि भूमिः प्रविहायेव रराज वक्रतां स्वाम् ॥१५॥
रभसेन ययुर्नभो रजांसि कणशस्तत्र ललम्बिरे च सेऽरम् ।
विशदा विदिशो दिशश्च नासन्नसितं वर्णमवाप काननान्तः ॥१६॥
द्विजसूनुरभूदभूतपूर्वं रभसं वीक्ष्य रथस्य वेपमानः ।
भृशमेव ववौ हि तत्र वायुर्निमिमीलाक्षियुगं बलाच्च तस्यः ॥१७॥

तुरगाः खुरसम्पुटैरनूनं निनदं काननकृष्णसारभीदम् ।
श्रुतिरम्यमिळापतेर्द्विजातेर्हृदयोत्कम्पनहेतुमेव चक्रुः ॥१८॥

ववमुर्हरयो मृगेश्वराभा नवफेनं धवलं निजाननेभ्यः ।
अनुभूय समागमं रजोभिः क्षणकालं लयमाप फेनराशिः ॥१९॥

बुबुधे न बुधोऽपि चण्डभानोः करतापं बहुतीक्ष्णमम्बरीषः ।
श्रममेष न चान्वभूत्स कश्चित्पवनेनैव सदाभिवीजितश्च ॥२०॥

अपि सारथिराप तत्र राज्ञो विभवं चामरवीजितस्य तस्य ।
तपनांशुचयात्तदिव्यशोभैस्तुरगाणां नवकेसरैः परीतः ॥२१॥

अपि मध्यगते दिनाधिनाथे गगनस्याप नृपश्च पुष्कराख्यम् ।
कुशिकान्वयकीर्तिदेन वत्स ह्यमुना मुक्तमपोटजं सशोभम् ॥२२॥

स समाप्य विधीन् दिनस्य राजा श्रमनाशाय तदाश्रमे च तस्थौ ।
द्विजसूनुरपश्यदुग्ररूपं निजबन्धुं विललाप तत्पुरस्तात् ॥२३॥

स हि मातुल मां पिता मदीयो नरपायादित यज्ञकर्मसिद्ध्यै ।
जननी सुतदानदुःखिताऽपि प्रतिराधं न ददौ भयाभिभूता ॥२४॥

कृपणं कृपयाधुना कृपाब्धे विपदः पाहि शरण्य मां सुबन्धो ।
इति वाक्यमुदात्त तत्पदाब्जे निपपाताथ स बाष्पपूर्णनेत्रः ॥२५॥

वचनैरतिनिर्मलैः मितात्मा पुनराश्वास्य स मृत्युदेवभीतम् ।
स्वसुतानवदद्गिरा महत्या महतामेव पुरस्सरो मुनीन्द्रः ॥२६॥

विदितं ननु योऽपि वत्सवर्याः जनको देवमुत्तमं नराणाम् ।
अपि तेन सुखं च ते लभन्ते विमलं ज्ञानमशेषमागमवृन्दम् ॥२७॥

शिरसा पदयोर्नतिः पितुस्तैः शुभचारित्रसुतैः सदैव कार्या ।
पितरो हि सभक्तिसेवयेड्याःपितुराशीर्वचनानि मोक्षदानि ॥२८॥

अधुना तदमुं सुतं भवन्तः करुणालापमवन्तु मृत्युवक्त्रात् ।
वचसा मम सत्वरं कुमारा भवतामन्यतमोऽनुयातु भूपम् ॥२९॥

पितुरेवमथो निशम्य तेषु प्रभुरेकोऽपि न चास कर्तुमाज्ञाम् ।
वरमेकसुतोऽपि यो गुणैः स्वैः पितरं तोषयतीह रामचन्द्र ॥३०॥

कथमात्मतनूद्भवान् विहाय स्वसुरप्यात्मभयेऽभिमान एषः ।
न हि धर्म्यमिदं पितस्त्वयोक्तं न वयं चानुसराम भूपमेनम् ॥३१॥

इति धर्मपरायणैः सुतैस्तैरुदितं धर्मबहिष्कृतं निशम्य ।
प्रतिवाक् प्रति तानपि प्रदर्श्य प्रतिवाक्येन शशाप तापसेन्द्रः ॥३२॥

जनकेन सुताः सुशीलहीना इति शापात् श्वपचाशनाः कृताश्च ।
प्रवरो यमिनां ततस्सुताय स्वभगिन्याः प्रददौ शुभां हि रक्षाम् ॥३३॥

अभिवाद्य ऋचीकपुत्र एनं शिरसा मन्त्रवरेण गुप्तगात्रः ।
स निरस्तभयो मुनेर्नियोगान्नृपतिं प्राप पुरं मुदा प्रयातुम् ॥३४॥

स ययौ सपशुर्निरूपमाणः क्षितिपालः स्वपुरं च यज्ञहेतोः ।
अमराधिपतिर्जयाभिदीप्तोऽप्यमरेड्याममरावतीं यथा वा ॥३५॥

कुरुते स महाक्रतुं नृपालः स ऋचीकात्मजनश्च गायति स ।
मुनिना वदिताच्च मन्त्रवाक्यात्तदनु प्राप फलं स रामचन्द्र ॥३६॥

पशुरप्यास सुतः स मृत्युमुक्तो नृपतिश्चाप ततः क्रतोः फलानि ।
[illegible] मवत्कुशिकात्मजोऽपि हृष्टः सकलं मङ्गलमध्वरे बभूव ॥३७॥

स्थितवान् पुनरप्यसौ महर्षिस्तपसि स्वस्थमना मुनीन्द्रमध्ये ।
हृदयं विमलं बभूव तस्य विमला दिग्विषयाश्च रेजिरेऽत्र ॥३८॥

तपसस्तपनद्युतिर्मुनीन्द्रः किरणान् दिक्षु विसार्य संस्थितोऽभूत् ।
अपिधातुमथाजगाम कान्तिं विपिने तस्य घनेव मेघमाला ॥३९॥

सुरयोषिदमुष्य मेनकाख्या निकटं प्राप तपोऽन्तरायमूर्तिः ।
विधिना ननु चोदिता वरोरुर्वरवस्त्वस्ति जितेन्द्रियं विजेतुम् ॥४०॥

सकलाभरणैरलङ्कृताङ्गी कुचभारेण समुन्नता नताङ्गी ।
तरुणारुणपाटलाननाब्जा गणिका सा मुनिलोभनार्थमायात् ॥४१॥

मदनोऽपि मदप्रपाटलाक्ष्याः सरागश्चापधरः श्रियः सहायः ।
अरविन्दमुखान् मृदुस्वभावान् सुमबाणानभिवर्षति स्म तत्र ॥४२॥

नवमेघनिभालकावलीभिर्ग्रथिताभिर्नवपुष्पमालिकाभिः ।
रमणीयतमोत्तमाङ्गयुक्ता सुरनारी विबभौ मुनेः पुरस्तात् ॥४३॥

चललोचनपङ्कजा रतिज्ञा शशिचिह्नार्धललाटपट्टिका सा ।
ललिता ललितेव चन्द्रमौलेरिव तस्थौ पुर एव शैलकन्या ॥४४॥

अथ सा कुशला च गानकार्ये रसिकानन्दननिस्वनैः स्वरज्ञा ।
मुखपद्मसुमात्सुधामयं वा सुखगीतं मकरन्दमुत्ससर्ज ॥४५॥

कटिदेशनिविष्टवामपाणिर्भ्रमयन्ती करपल्लवमन्यत् ।
विननर्त पदातिपादवेन प्रथमं ताडितवन्यभूमिभागा ॥४६॥

भरतागमपण्डिता भरेण रतिमुद्राः करपल्लवे च धृत्वा ।
किरणानभिसार्य दन्तपङ्क्तेश्चपलाक्षी विननर्त नर्तकी सा ॥४७॥

वलयीकृतदिव्यदेहयष्टिर्विषयासक्तिपतीव नाटयन्ती ।
विमला विषमेषुरञ्जितास्या रभसेन प्रणनर्त सुन्दराङ्गी ॥४८॥

हरताण्डवमेकदा चकार प्रसभं चापि रतिप्रियस्य पश्चात् ।
अथ गीतिरसं समुत्क्षिपन्ती सकला नाट्यकलेव सा रराज ॥४९॥

अभिरामनितम्बमुद्वहन्ती विचचाराश्रमवाजिकर्षणेव ।
कुसुमैः कुसुमेषुमर्चयन्ती विमलैः सा समयं प्रतीक्षते स्म ॥५०॥

भुजगोपमबाहुयुग्ममूर्ध्वं प्रविसार्याम्रफलं ग्रहीतुकामा ।
नवचूतमहीरुहस्य मूले भुजमूलं मुनये च दर्शयित्वा ॥५१॥

मुमुदेऽथ ननर्त सा चुकूज प्रपपं धावति तापसात्स्म दूरम् ।
विविधामकरोच्च विभ्रमालिं पुरतस्तस्य सुराङ्गना महर्षेः ॥५२॥

कुसुमावचयं मनोहराङ्गी मुनिवर्यं नयनाञ्चलेन दृष्ट्वा ।
कुरुते स्म यथागतिर्वरोरूर्मुनये दातुमनन्तरं ययौ तम् ॥५३॥

अपमाप परन्तु जेतुमेनं न शशाकामरलोकसुन्दरी सा ।
तदगात् सरसीं सरोरुहाक्षी सहपङ्केरुहपङ्क्तिमम्बुकेल्यै ॥५४॥

वसनं च विहाय तीरदेशे निममज्जाथ जलेऽमले सुशीते ।
प्रविसार्य शिरोरुहं जलान्ते शिरसा केवलमृच्छति स्म रामा ॥५५॥

भ्रमिता च तरङ्गमध्यसंस्था कुटिला कुन्तलराशिरम्बुमध्ये ।
तनुमेव फणावतः स्थितायाः भुजगस्यानुचकार देवनार्याः ॥५६॥

कठिनस्तनताडिता तया सा सरसी कूजितमुज्जगौ समन्तात् ।
स तु तेन मुनिर्मनोहरेण प्रबुबोध स्वतपःक्रियां विहाय ॥५७॥

निनदं प्रति लोचने मुनीन्द्रः प्रददौ तत्र ददर्श चारुमूर्तिम् ।
जलकेलिनिमग्नमानसां तां वनदेवीमिव रूपिणीं स साक्षात् ॥५८॥

कुसुमेषुशरैः क्षणे च तस्मिन् परिविद्धो हि समागमं चकाङ्क्ष ।
सह मेनकया तया मुनीन्द्रः स बभूवाथ विनष्टबुद्धिशक्तिः ॥५९॥

प्रसमीक्ष्य सुराङ्गनापि सा तं तटमासाद्य भिया ह्रिया नताङ्गी ।
वसनेन निजं पिधाय गात्रं करयुग्मेन घृनेन वेपमाना ॥६०॥

कमलाक्षि किमागतासि भद्रे मम गेहं तपसि स्थितस्य घोरे ।
त्वयि दत्तमना मनोज्ञरूपे न च शक्नोमि तपः समाप्तुमद्य ॥६१॥

तदिहैव वसाश्रमे मम त्वं चिरकालं कुरु मां च पूर्णकामम् ।
स्वमपीन्दुनिभानने समेत्य प्रमदं नन्दसि मामतीव लब्ध्वा ॥६२॥

कथयाद्य वराङ्गनेऽसि का त्वं सुरलोकादथवागतासि भीरु ।
हृदयं मम तावदेति रामे महतीं तुष्टिमनङ्गतां च वाञ्छाम् ॥६३॥

स कृतेन्द्रियनिग्रहो महर्षिः परवानास महेन्द्रचारनार्याः ।
इति वाक्यमुदीरितं निशम्य क्षितिभागं लिखती च साथि तस्थौ ॥६४॥

स्वपदाङ्गुलिभिर्नखैर्लिखन्तीं पृथिवीं रक्तकपोलकान्तिदीप्ताम् ।
स समीक्ष्य मुनिः पुनः पुनस्तां प्रसुनोमातिपराङ्मुखः स्वकार्ये ॥६५॥

परिरभ्य भृशं च तापसस्तां स निनायाश्रममर्मगेहमेव ।
सह तेन सुखेन दिव्यनारी दशवर्षात्मककालमभ्युवास ॥६६॥

तदनन्तरमेव तापसेन्द्रो रघुवीरानुतताप च प्रबुद्धः ।
मधुरैर्वचनैः सुरेन्द्रदास्या विनयोऽस्मिन्नपि सर्वरानाम् ॥६७॥

भयकम्पितविग्रहां शुभाङ्गीं स मदन्मामुपकारिणीं ददर्श ।
नयनाम्बुझरीभिरार्द्रवक्त्रां करुणार्द्रीकृतमानसः समक्तिम् ॥६८॥

विरहानलदग्धगात्रशोभामपि निःश्वासचलत्पयोधरान्ताम् ।
स शशाप कृपापरोऽबलां नो क इहार्तां विदुनोति दीनयोषाम् ॥६९॥

इति विघ्नपरम्पराभिरार्यः परितप्तो हिमवन्तमद्रिराजम् ।
प्रययौ निजचित्ततापशान्त्यै हिमनीरैरभिषिच्य वर्तुमेव ॥७०॥

कुररीगणसंकुलं वनं तत्तटिनीनीरभवश्च चारुशब्दः ।
बहुदुःखनिपीडितस्य चित्तं बहुधानन्दयति स्म तत्र तस्य ॥७१॥

अतिशान्ततटं मुनिः प्रपेदे चरितुं घोरतपांसि कौशिकीयम् ।
प्रयतत्वनिदानतस्तटस्य प्रसभं प्रेमपरः किलानुजायाम् ॥७२॥

पदमाप महर्षिशब्दवाच्यं तपसासौ न तथापि तेन तृप्तः ।
पुनरेव जितेन्द्रियो बभूव ह्यधिगन्तुं पदवीं महीसुराणाम् ॥७३॥

पुरशत्रुनिभं तपःक्रियायां पुरुहूतो हितमात्मनो विचिन्त्य ।
परिमोहयितुं पुनश्च रम्भामखिलाङ्गेषु मनोहरामुवाच ॥७४॥

दयिते दयया मुनेः सकाशं त्वरितं याहि न शापभीतिरस्ति ।
तव विभ्रममोहितो मुनीन्द्रः स हि कन्दर्पवशो भविष्यतीह ॥७५॥

वनिते मयि मङ्गलस्वरूपे सशरे तिष्ठति ते कुतो भयं स्यात् ।
रजनीरमणे भवत्समक्षे सति रात्रिस्तमसो बिभेति नैव ॥७६॥

पिकरूपधरोऽप्यहं वनेषु प्रमदे तेऽद्य सहायको भवामि ।
भुवनत्रयमोहनं वपुस्ते स तदा वीक्ष्य विमुह्यतीति मन्ये ॥७७॥

दहति त्रिदिवं तदीश्वरं च त्रिदशान् दिव्यतपःक्रिया महर्षेः ।
दववह्निरिवानवद्यरूपे सकलं प्राणियुतं च काननान्तम् ॥७८॥

न सहे नवनीतकोमलाङ्गि तपसो वह्निममोघशक्तिपूर्णम् ।
नवनीतमिवास्मि वह्निभासा द्रवरूपं खलु तापसस्य तापात् ॥७९॥

यदि मन्यसि देवि मङ्गलाङ्गि ह्यनुरक्ता कुरु तापसस्य मोहम् ।
कुरुषे यदि नैवमप्सरीय सकलं नश्यति यन्मुनिर्महात्मा ॥८०॥

विजितेन्द्रियवर्गमिन्दुवक्त्रे न भवामः प्रभवो वयं विजेतुम् ।
छलनं नय तापसं वचोभिस्तव रूपेण च विभ्रमैर्मनोज्ञैः ॥८१॥

प्रभुणा प्रमदा निशम्य चोक्तं प्रययौ यत्र मुनिस्तपोधनाग्र्यः ।
प्रभुतोषणकार्यमग्नचित्ता तृणवज्जीवितमात्मनोऽपि मत्वा ॥८२॥

शिरसा प्रणतिं कृताञ्जलिः सा प्रणिधाय प्रभवे हठाद्विसृष्टा ।
जय शीघ्रमिहागता मया त्वं निवसानन्दमयीति तेन चोक्ता ॥८३॥

अनुभूतसुरेन्द्रदारयोषाखिलभोगो न मुमोह तां निशाम्य ।
अनुभूय गुणं हि चित्रभानोः शिशुरभ्येति कदा न तत्समीपम् ॥८४॥

जगतीतलदुर्लभां स रम्भां सुकुमारीं विनतोत्तमाङ्गभागाम् ।
नयनेन दयारुणेन वीक्ष्य प्रमदे त्वं च जगौ शिला भवेति ॥८५॥

प्रतिघापरवाननन्तरं स प्रविहायाद्रिमयात्सुरेन्द्रकाष्ठाम् ।
सुचिरं तपसि व्यतिष्ठताहो त्रिदशेशोऽपि बभूव विह्वलात्मा ॥८६॥

रघुनाथ मुनिर्बभूव पश्चाद्रिपुषड्वर्गजयी सितान्तरात्मा ।
ददृशे तपसः फलं च तेन त्रिदशाधीश्वरभीतिदं न देव ॥८७॥

चक्रमे न च किञ्चिदेव सिद्धो ह्यपि कस्मै न चुकोप शान्तकोपः ।
न लुलोभ च मोहजालवृन्दे न पपाताथ सदा स जागरूकः ॥८८॥

बहुवत्सरकालमेष धीरो गततृष्णो व्यशनस्तपश्चकार ।
मुनिराश्रममूर्न्मुदाभिपूर्णं तपसां वह्निरभूच्च धूमकेतुः ॥८९॥

इति सर्वजगत्समूहमेष प्रददाहामरनायकं तथैव ।
निखिलावनिमण्डलं चकम्पे ससमुद्रं च सकाननं सशैलम् ॥९०॥

मुनिरेष यदोपवासदीनो ह्यशनाशापरिपीडितस्तदागात् ।
निकटं स निलिम्पवृन्दवन्द्यः पुनरप्यस्य तपोविनाशनार्थम् ॥९१॥

व्यधुनत्वकृशोऽपि तापसेन्द्रः सुरगोत्रे द्विजरूपधारिणेऽसौ ।
ब्रुवते क्षुधितोऽहमित्यपोषैः प्रददावन्नमदाद्धिरं न किञ्चित् ॥९२॥

न शशाक शचीपतिर्मुनीन्द्रं प्रविजेतुं जितकोपतापमेनम् ।
स सुरैः सहितो ययौ शरण्यं शरणं लोकपितामहं वरेण्यम् ॥९३॥

मुनये न यदीप्सितं ददासि त्रिजगद्धक्ष्यति तापसाग्निदग्धम् ।
हृदयं सदयं मुनेरिहास्ति प्रविधूताखिलकिल्बिषं च भाति ॥९४॥

शरदीव सरी सुरापगाया गगनं वा गतनीलमेघवृन्दम् ।
तपसा तपनोपमो महर्षिर्विमलो भाति हिरण्यगर्भ तावत् ॥९५॥

इति दीनगिरं गिरामधीशः स निशम्याथ ययौ मुनेः समीपम् ।
सह नाकनृपालकेन देवैरपि सर्वैर्मुनिकाङ्क्षितं प्रदातुम् ॥९६॥

अलमद्य तपःक्रियाभिराभिस्तपतामुत्तम तुष्टमानसोऽहम् ।
पदमेव ददामि महत्त्वमं भवसीतः प्रभृतीह विप्रवर्यः ॥९७॥

अवदन्मुनिमित्थमात्मभूस्तं त्वमुनासौ न तुतोष केवलेन ।
अथ सोऽपि वसिष्ठतापसेन स्तुत एवं हि बभूव लब्धकामः ॥९८॥

अपि विघ्नपरम्पराभिरेष मनिविद्धोऽन जहौ क्रियां स्वकीयाम् ।
रघुवीर महामतिं महर्षिं गुरुमेवासि च भाग्यवानवाप्य ॥९९॥

इति वाक्यमुदीर्य तं पुरोधा जनकस्येनकुलप्रभानिदानम् ।
विरराम महीपतिर्महीयानभवत्प्रीतिभराभिपूर्णचित्तः ॥१००॥

स्मृतवानथ पूर्वकालवृत्तं कथया कौशिकतापस सरामः ।
प्रशशंस पुरोहितं नृपेन्द्रो. स शतानन्दममन्दहर्षभाग्त्वा ॥१०१॥

श्रीनिर्भरा निजपुरोहितवाक्यरम्यां
श्रुत्वा कथां स मिथिलाधिपतिर्मनोज्ञाम् ।
तं कौशिकं रघुवरौ च हसन्मुखाब्जौ
पूजाक्रियाभिरमलाभिरनन्दयच्च ॥१०२॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

इति श्रीसीतास्वयंवरे महाकाव्ये श्र्यङ्के

॥ विश्वामित्रतपःसमाप्तिर्नाम ॥

॥ चतुर्दशः सर्गः ॥

---

ज्येष्ठा सुता मेऽस्ति शशाङ्करम्या नाम्ना च सीतेति समुज्ज्वलास्या।
लब्धा मया या कृषता च भूमिं तद्गर्भजातेव सुवर्णरेखा ॥८॥

गृहे मदीये सितपक्षचन्द्ररेखेव सीता ववृधे हि तस्याः।
स्वयंवरः श्वो भवतीति रामश्चानीयतां वा भवतेह शीघ्रम् ॥९॥

अयोनिजा सा गुणरूपयुक्ता प्रदीयते वीरवराय सीता।
पद्मावतारामिह तां नु मत्वा करोमि भार्यां पुरुषोत्तमस्य ॥१०॥

ज्यामर्पयित्वा हरकार्मुके यो मन्मन्दिरस्थे महनीयकीर्तिः।
सा तस्य भार्या भवतीह सीता महामुने राममिहानयातः ॥११॥

मुनिनायमथ तापसस्तथा तं विसृज्य निजकर्मतत्परः।
तत्परेद्यवि समं च पावनीं गन्तुमैच्छदतिहर्षनिर्भरः ॥१२॥

संसदं सह समाससाद तां राजसूनुयुगलेन तापसः।
स्वागतं जनकराट् तदा ददौ तत्त्रयाय कनकासनानि च ॥१३॥

भारता विविधदेशजो नृपा आगता जनकराजसंसदम्।
मैथिलीवदनपद्मदर्शने षट्पदा इव कुतूहलोन्मुखाः ॥१४॥

तत्र तत्र स यथोचितासने सन्निविष्टमवनीशमण्डलम्।
वीक्ष्य संशयमवाप जानकीपाणिपल्लवपरिग्रहे शुभे ॥१५॥

दक्षिणोऽस्फुरदथो भुजोऽञ्जसा दक्षिणस्य रघुजस्य तत्क्षणे।
दक्षिणं नयनपङ्कजं तथा तेन संशयलताप्यलूयत ॥१६॥

कामरूपनरपः समाययौ कामबाणनिहतः स मूर्तिमान्।
मेदिनीदुहितृपाणिनीं विभुः कामयान इव सादरस्तदा ॥१७॥

वङ्गदेशपरिपालको महानङ्गनाजनरतिप्रदः प्रधीः ।
अङ्गनामणिकरग्रहेच्छयानङ्गबाणशिखिलीकृताङ्गकः ॥१८॥

सिंहलाधिपतिरप्यनेकधा राजसिंह इव कामपीडितः ।
सिंहपीठमधितिष्ठति स्म स सिंहराडिव पराक्रमी तदा ॥१९॥

अङ्गराजतनयः स्वयंवरं स्वीयवीर्यतुलनाकुतूहलः ।
आजगाम वरणेच्छयावृतस्तत्सभां प्रति शुभां च सत्वरम् ॥२०॥

मालवेश्वरवरस्तथाययौ मालतीकुसुमपेशलां शिवाम् ।
मालिकामिव वरां वराङ्गनां भूषणं शिरसि कर्तुमुद्यतः ॥२१॥

अवन्तिनाथोऽपि जनेशसंमर्दं समासददूपगुणोज्ज्वलो वरः ।
वराङ्गनापाणिसरोजमार्दवं स्पृशन् मनस्येव च हर्षपूरितः ॥२२॥

स पाण्ड्यराजोऽपि मनोरथायुतप्रपूरितान्तःकरणो रणोज्ज्वलः ।
समाजगामेव जगज्जिगीषया समुद्यतः पुष्पशरासनः स्वयम् ॥२३॥

कलिङ्गदेशादपि गौडदेशतः सुराष्ट्रनाम्नोऽपरदेशतस्तथा ।
नृपेन्द्रपुत्रा निजवीर्यदर्शने समुत्सुकाश्चाययुरुग्रपौरुषाः ॥२४॥

तथैव देवासुरसिद्धकिन्नरा नराधिपाश्चैव पतिंवरेक्षणे ।
क्षणोत्सुका वेगयुतैर्विमानकैः समागमन् भूरिपरिष्कृतास्तथा ॥२५॥

रथैश्च केचिच्छरटैस्तथापरे समुज्ज्वलैर्यन्त्रबलेन निर्मितैः ।
विमानकैर्मानधनाः समाययुः सधूमधूलीसहितैस्ततो वरैः ॥२६॥

नरा दरिद्रास्तु नृपस्य पत्तनं प्रपेदिरे केवलमङ्घ्रिचारिणः ।
दिदृक्षवस्ते जनकेन्द्रकन्यकास्वयंवरं चित्तहरं महीतले ॥२७॥

महीभृतां तत्र पुरे समन्ततः पटालया निर्ममिरे मटैर्वरैः ।
सितांशुकालङ्कृतसर्वविग्रहा वधूरिवामून्मिथिलापि तैर्वृता ॥२८॥

नृपेन्द्रसेनोरुयशःप्रसारिणो हयास्समन्ताद्द्विरदास्तथैव च ।
निनादमानन्ददमेव चक्रिरे पुरीमथो व्याप्य यथा रणाङ्गणे ॥२९॥

विदेहराजस्य पुरी स्वलङ्कृता रसालवृक्षोद्भवपल्लवाधरा ।
सुवर्णकुम्भस्तनशोभिता बभौ नवीनरम्भोरुयुतेव कामिनी ॥३०॥

ततोऽपि तूर्यस्वनपूरिता पुरी रणद्भिर्मूपैर्वनिताकदम्बकैः ।
ननर्त नाट्यागमपण्डिताङ्गना प्रगल्भताविष्करणोद्यतेव सा ॥३१॥

अलमकुरुत तत्सभां मुनीना-
मपि निचयो जटयाभिरामभानः ।
मुनिरपि कुशिकात्मजः सतेजा
दशरथसूनुसमीप एव तत्र ॥३२॥

सचिववरगणोऽपि तत्सभायां
सह विबुधैर्विबुधोपमैर्विरेजे ।
नृपमुखनयनेभ्य एव चाज्ञा-
जननिरीक्षणतत्परः समन्तात् ॥३३॥

जनकनृपतिरादिदेश पश्चा-
द्वरमरितां प्रसमीक्ष्य राजगोष्ठीम् ।
शिवधनुरभिनेतुमात्मकन्यां
झटिति च तत्र यथोक्तकान्तिपूर्णे ॥३४॥

ययुरथ सुभटाः सहस्रशस्ते
शिवधनुरानयनाय वेगयुक्ताः ।
शिरसि नृपवरानुदेशवाहाः
शिवतमशीलगुणान्विताश्च भूयः ॥३५॥

अतिगुरु गिरिजेशकार्मुकं ते
रथनिलये विनिवेश्य विस्तृतान्ते ।
हयवरप्लुतयोजिते बलिष्ठे
रभसयुताः प्रतिजग्मुरेव गोष्ठीम् ॥३६॥

धनुरथ रथमध्यभागसंस्थं
रुचिरतरं रथवेगतोऽभिगच्छत् ।
अभजत शिवरूपवैभवाना-
मिव विविधानि विशेषतः शतानि ॥३७॥

अलभत भवनं नृपेश्वरस्य
भवधनुरुग्ररयेण तद्रथेन ।
अहमहमिकया नृपात्मजास्त-
न्नृपभवने सकुतूहला ह्यपश्यन् ॥३८॥

जनकनरपतिर्विहाय पीठं
पशुपतिकार्मुकमेव भक्तिपूर्णः ।
सचिववरगणैः सह स्वकीयै-
रथि धनुषे प्रणनाम सादरं च ॥३९॥

धनुषि मुमुचुरात्मजा नृपाणां
गुरुणि जगद्गुरुवीर्यसंयुते ते ।
सह निजहृदयाशयापि लाभे
नृपदुहितुश्च तथैव मातमरष्टीः ॥४०॥

रघुवरतिलकस्ततः समीक्ष्य
स्थिरधनुरक्षियुगेन तत्पुरस्तात् ।
कृतिनममनुतात्मनो वरांसं
पुलकितमेव बभूव बाहुयुग्मम् ॥४१॥

सीतां विभूषणवरैर्नृपतेरनुज्ञा-
बद्धा भटाश्च परिभूषयितुं निवेद्य ।
अन्तःपुरं किल पथा च यथागतेन
जग्मुः सभां प्रति रयेण महीयसा ते ॥४२॥

काचित्सखी जनकवर्धितकन्यकाया
भृङ्गावलीनिभशिरोरुहराजिमेव ।
चित्रं प्रसाध्य कुसुमैरतिपेशलाङ्गी
चूडीं बबन्ध सहितां कलकाञ्चलेन ॥४३॥

अम्भोजपत्रविशदे नयनेऽथ काचि-
त्पूर्णोऽञ्जनेन च चकार पङ्कभ्रिनीले।
हेमाङ्गदानि सरसानि बबन्ध तस्या
लाक्षारसद्विगुणिताङ्घ्रिसरोजकान्त्याः ॥४४॥

हेमाम्बुजावृतनिजावयवां वराङ्गीं
हेमोज्ज्वलां पृथुतरं च चकार दीप्ताम् ।
काचित्ततः कनकदामनिबद्धमध्यां
चक्रेऽथ चक्रवलयामनितम्बबिम्बाम् ॥४५॥

जाज्वल्यमानशतदर्पणबिम्बिताङ्गी
सीता निजाङ्गविभवं च समीक्षमाणा ।
लज्जावनम्रवदनारुणवर्णगण्डा
तस्थौ स्मरस्य कमनीयपताकिकेव ॥४६॥

हेमांशुकान्तरितपीनकुचौ हि तस्या
रम्यौ सुवर्णघटसन्निभकान्तिपूर्णौ ।
मीनध्वजे त्रिभुवनस्य जयाय सज्जे
तीर्थप्रपूर्णकलशाविव रामतः स ॥४७॥

चन्द्रार्धरम्यनिटिले मिथिलात्मजाया
वृत्ताकृतिं रुचिरचन्दनबिन्दुमेव ।
काचिच्चकार किल तेन रुचिं प्रपेदे
सा पद्मजाद्युतिनिभामिव भूरि साक्षात् ॥४८॥

सख्या कयाचिदथ भूमिसमुद्भवा सा
कान्तं लभस्व विमले पुरुषोत्तमं त्वम् ।
इत्युक्तिभिर्निगदितार्थवरीक्षणेन
लज्जाभरेण च जघान सखीं हसन्ती ॥४९॥

कण्ठेऽथ मौक्तिकमणीन् स्फुरदंशुमालान्
　रत्नानि वा तरलहारवरान् कुमारी ।
कर्णद्वये रुचिरचञ्चलकुण्डले सा
　चक्रे पदोः कनकनूपुरयुग्ममेव ॥९०॥

लक्ष्मीरनि वरयितुं चलितेव लक्ष्मीः
　यानं ततश्च समलङ्कृतमारुरोह ।
सा भूमिजा सह सखीनिचयेन सुभ्रू-
　र्नत्वा हृदि स्वकुलदैवतमाप्रतस्थे ॥९१॥

प्राणसख्या समं सीता यानमारुह्य मण्डपम्
स्वयंवरस्य सर्वाङ्गसुन्दरी गच्छति स्म सा ॥९२॥

संलापरञ्जिता रम्या रमणीयगुणोज्ज्वला
ध्यायन्ती हृदये रामं साक्षाद्विष्णुमिव स्थितम् ॥९३॥

किङ्करेभ्यो गुणांस्तस्य रूपमुज्ज्वलमव्ययं ।
श्रुत्वानुरक्तचित्तासूत्तस्मिन्वरे शुभा ॥९४॥

वामाक्षिस्पन्दनं वामा वामबाहोश्च कम्पनम् ।
दृष्ट्वा सुकृतिनं मेने ह्यात्मानं मङ्गलानना ॥९५॥

पद्माक्षी पद्मवदना पद्ममार्दवधारिणी ।
पद्मरेखाङ्कितपदा रेजे पद्ममयीव सा ॥९६॥

यानारूढालसञ्जातसीताहेमलतोपरि ।
अधरः पल्लवो नेत्रं सुमं घ्राणं च कुड्मलः ॥९७॥

वैदेही देहगन्धेन गन्धवाहं चकार सा
कृतार्थं मङ्गलाङ्गीव कुसुमोद्गधिना लता ॥५८॥
उन्नतं च कुचद्वन्द्वं तस्या हंसयुगोपमम् ।
कस्रं कम्प्रं बभौ भासा हृदये सरसीव च ॥५९॥
अधरे मधुरा धारा सीताया मधुनो रयात् ।
मधुपानभितो यानं हृ रति स च सादरम् ॥६०॥
अधःकेशा सुवर्णास्या ताम्रोष्ठी रजतद्विजा ।
कांस्योत्सङ्गा धरापुत्री बभौ लोहमयीव मा ॥६१॥
यथा यथा मनोज्ञा सा स्वयंवरमगादरम् ।
तथा तथा मनस्तस्याः प्रेमपूर्ण च सादरम् ॥६२॥
कल्याणी मन्दिरं दिव्यं समायाः प्रविवेश च ।
नत्वा पितृपदांभोजे हैमासनमथासदत् ॥६३॥
राजात्मजा राजवरात्मजातां सीतां सुवर्णासनसन्निविष्टाम् ।
दृष्ट्वा च रोमाञ्चवराः समायां शृङ्गारचेष्टानिरता बभूवुः ॥६४॥
कश्चित्सरोजं सरसं कराभ्यां धृत्वा सहासं नृपकन्यकायाः ।
आघ्राय गन्धं पुरतः समायं लीलावरं तद्भ्रमयाञ्चकार ॥६५॥
मालामनङ्गातुरचित्तवृत्तिः चेतोहरां रम्यतरां प्रसूनैः ।
धृत्वा मुहुर्मैथिलकन्यकाया दृष्टिं प्रसार्यास रसाभिपूर्णः ॥६६॥
कश्चित्तथा पाणिसरोरुहे स्वे वक्षस्थले गाढतमे निधाय ।
साक्षीकृतास्य' कमलायताक्षीं सीतामपाङ्गेन समीक्षते स ॥६७॥

बद्धाञ्जलिं कश्चिदथावनीशः प्रेमाभिपूर्णं कलशं यथा वा ।
किञ्चिद्विहस्याप्यतिकोमलाङ्गीं कान्ताननं सानुनयं ददर्श ॥६८॥

कश्चित्सुमं कैतकमेव धृत्वा हस्ते पुनश्चारुदलं तदक्ष्णोः ।
निवेश्य तद्घ्राणतले च पश्चान्मन्दं समाघ्राय ननन्द भूरि ॥६९॥

सीतापि सा मान्यवधूषु धुर्या मेने न किञ्चिन्नृपचेष्टितानि ।
श्रीरामचन्द्रं कुशिकात्मजातपार्श्वस्थमेवास समीक्षमाणा ॥७०॥

ज्योत्स्ना विदेहाधिपकन्यकाया दन्तप्रभूता सितरश्मियुक्ता ।
सद्योनभोजातमतीव शुभ्रं रामाभिधं चन्द्रमिवान्वगच्छत् ॥७१॥

अम्भोजिनी नैव शशाङ्कमूर्तिं भानुं तथा कैरविणी समेति ।
सीताम्बुजास्या कुमुदप्रभाक्षी रामं शशाङ्कार्कनिभं प्रपेदे ॥७२॥

दृष्ट्वा न सा तृप्तिमविन्दतामुं सीतापि शीतांशुमिव प्रवृद्धम् ।
लोकोत्तरं रूपचयं समीक्ष्य प्रीतिं प्रपेदे हृदयान्तराले ॥७३॥

जन्मान्तरप्राप्तसमागमानां जातो बलेनैव तयोः समायाम् ।
शुभ्रानुरागस्तु परस्परं च प्रेमाङ्कुरं सोऽपि पुपोष पश्चात् ॥७४॥

रामानलास्तु प्रमान्तरे स्वीयं-
प्रोत्कर्षं प्रकटयितुं समारभन्त ।
सर्वे ते जनकनृपाङ्गनाकराब्ज-
स्वीकारे परमरसा इवाभवन् वा ॥७५॥

अङ्गेशः प्रथममगाद्धनुःसमीपं
गत्वा तद्ग्रहणरतो यदा बभूव ।
कैलासाचल इव नोच्चचाल किञ्चि-
द्यत्नैरप्यलघुबलेन कृष्टकाण्डम् ॥७६॥

लङ्केशो गिरिशधनुर्ग्रहीतुमेवं
साटोपो विलसितसर्वशीर्षपङ्क्तिः ।
गत्वा तत्प्रथितबलः समाचकर्ष
घ्राणानमुपरि पपात तस्य कृष्टम् ॥७७॥

घ्राणेभ्यो रुधिरकणा हि तस्य पेतु-
स्ते शैलात्सरित इवावहन् सभायाम् ।
संभ्रान्तो नृपतिगणश्च तत्समीक्ष्य
त्रासादप्यचलदधात्मजाघलायाः ॥७८॥

पृथ्वीजा सुमयुतकिंशुकाभमेनं
तिष्ठन्तं निशिचरवल्लभं समीक्ष्य ।
भीतान्तःकरणयुता जहास किञ्चि-
त्तेनैवाभवदसुरेश्वरोऽपि रुष्टः ॥७९॥

सासाद्वा स्थिर इव तद्धनुर्विरेजे
नैकोऽपि प्रभुरभवच्च चालनेऽस्य ।
सोत्साहास्तदभिमुखमस्य राजपुत्रा
गत्वा ते प्रतिविनिवृत्य भग्नचित्ताः ॥८०॥

कोदण्डं शिवबलसंयुतं स रामो
दृष्ट्वारं हसितमुखाम्बुजाभिदीप्तः ।
पार्श्वस्थं कुशिकतनूद्भवं गुरुं स्वं
ह्याज्ञार्थं प्रणतिपुरस्सरं ययाचे ॥८१॥

सोऽप्येवं रघुकुलवार्धिचन्द्रमूचे
गच्छ त्वं नरवर कीर्तिकान्तवक्त्रः ।
निःशङ्कं भवसि जयी च जानकीशो
जानामि त्वदखिलवीर्यमत्र राम ।८२॥

श्रीरामस्तदनु धनुस्समीपगामी
राजानं निजपितरं प्रणम्य चित्ते ।
प्राचीनानपि रघुवंशकीर्तिदातॄन्
गीशानं धनुरधिदैवतं ननाम ॥८३॥

'भर्ता मे भवतु महानुभाव एष
श्रीरामो दशरथराजपुत्रवर्यः ।
सीतेत्थं मनसि विभाव्य बद्धपाणि-
र्भक्त्यैवानमदखिलान् सुरान् जयार्थम् ॥८४॥

निर्गुणे धनुषि शाम्भववीर्ये राघवो गुणमथो विनिधातुम् ।
धाटकोऽपि सहसा स ययौ तद्वामपाणितलतः स्पृशति स्म ॥८५॥

वीटया धनुरसौ मदनाभः कामदेवकुसुमकार्मुकरूपम् ।
आत्मकामपरिसाधनमूलं राघवो नु जगृहे झटितीव ॥८६॥

मल्लिकाकुसुमयुतेव सुमाला सा रराज रघुवंशजपाणौ ।
कार्मुकाभिघलता गुरुवीर्या विस्मयावृतमनस्सु नृपेषु ॥८७॥
अर्धवर्तुलनिभं रमणीयं तद्धनुः करतलेन गृहीत्वा ।
मन्यते स जनकेन्द्रतनूजाभ्रूतलं करतलस्थितमेव ॥८८॥
धाम वैष्णवमहो रघुवर्यो वीक्ष्य शैवममवद्धनुनम्रम् ।
एवमेव हि सदा भवतीह विष्णुदेवशिवयोरभिमानः ॥८९॥
दक्षिणेतरकरेण स रामः कार्मुकाग्रमधरं परिपीड्य ।
दक्षिणेन हि करेण च दक्षस्तूर्णमेव जगृहे सहसैवम् ॥९०॥
तत्तदा धनुरभिद्यत शीघ्रं विष्णुवीर्यपरिपीडितकाण्डम् ।
मेघनादसमशब्दपरीतं भूतलोपरि पपात विभिन्नम् ॥९१॥
तेन भीदनिनदेन च भूमिः साचला सविपिना विचकम्पे ।
स्वासनेषु नरपा भ्रमविद्धा दिक्तटान्न विविदुर्भयपूर्णाः ॥९२॥
मध्यवृष्टिमुदिता पिकसङ्घाश्चातकाः स्तुतिपराश्च बभूवुः ।
भिन्नकार्मुकरवे स्तनिताभे दिक्तटान्परिगते नु तदानीम् ॥९३॥
राघवो यदि भवेदसिताब्दः कार्मुकध्वनिरपि स्तनितामः ।
जानकी नु चपला चलितेव संमदाम्बु निपपात समन्तात् ॥९४॥

अथ नरपतिलोको बालकेनाद्भुतं त-
त्कृतमतिचतुरेण प्रेक्ष्य कर्मातिरेकम् ।
रघुकुलतिलकेन श्रीधरेणेव साक्षा-
दभवदपि समस्तः प्रोद्धतो द्वेषरुड्भ्याम् ॥९५॥

जनकनृपतिकन्या रामचन्द्रं सभायां
जयविलसितवक्त्रं वीक्ष्य सौहार्दहृद्या ।
पुलकितशुभगात्रा चारुकान्तिर्बभासे
ज्वलदनलसमाना श्रीरिवान्या भुविस्था ॥९६॥

भवतु धरणीजा भाग्यलक्ष्मीरितीड्या
नरवरदयिताहं वीरपत्नीधुरिस्था ।
जनकनृपनिदेशाद्दिव्यमालां गृहीत्वा
नतनिभशिरसा तत्कण्ठलग्नां चकार ॥९७॥

लज्जाभरेण विनता विनयादिशीलै-
र्दीप्ता विदेहतनया रघुनाथकण्ठे ।
मालां सुवर्णखचितामपि सानुरागां
प्रेमश्रियं तनुमतीमिव चाससञ्ज ॥९८॥

माला रघूद्वहगलेऽभवदंशुमाला
मालेव नीलजलदे तडितां यथा सा ।
भाति स्म भूरिरुचिरञ्जितसर्वगात्रो
रामस्तयाप्यननुभूतसुखं प्रपेदे ॥९९॥

मन्दाक्षमन्दगमना लतिकेव हेम्नो
नम्रानना रविकुलोत्तमपूरुषस्य ।
प्रेमार्द्रदेहविभवा ललिता पुरस्तात्
स्मित्वा भुवं परिलिलेख नखैर्लताङ्गी ॥१००॥

शरदि गगनसंस्थं चन्द्रिकेवामृतांशुं
नवजलदमनल्पं चञ्चलेवातिनीलम् ।
कनकखचितवल्ली मेरुशैलं यथा वा
नरवरमभिपेदे जानकी जीवितेशम् ॥१०१॥

उदयगिरिवरस्थं पद्मिनीवाब्जबन्धुं
हसितकुमुदिनी वा पूर्णचन्द्रं हसन्तम् ।
ज्वलदनलमिवैषा चाहुतिर्जानकी तं
निजपतिमनुरूपं श्रीपतिं श्रीरिवाप ॥१०१॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

इति श्रीसीतास्वयंवरे महाकाव्ये त्र्यङ्के

॥कार्मुकभञ्जनं नाम ॥

॥ पञ्चदशः सर्गः ॥

श्रीः

## ॥ षोडशः सर्गः ॥

## ॥ जानकीपरिणयः ॥

---

अमन्दमानन्दमथाभिपद्य प्रभुर्विदेहस्य जगाद भृत्यान् ।
पुरीमयोध्यां व्रजतातिवेगान्नृपेन्द्रमानेतुमिहेति तस्याः ॥१॥

तथेति ते वेगयुतैस्तुरङ्गैर्दिनत्रयेणैव पुरीमवापुः ।
प्रवेशिताः पङ्क्तिरथस्य गेहं पुरः स्थिताः प्राञ्जलयस्तमूचुः ॥२॥

भवन्तमस्मत्प्रभुराह राजन् ह्यनामयं विस्तृतराज्यवृन्दे ।
निवेदयत्येवमथो स राजा सगौरवं त्वां प्रणतोत्तमाङ्गः ॥३॥

भवत्सुतस्यातिपराक्रमं च प्रदर्शितं राजकुमारमध्ये ।
समीक्ष्य विस्मेरमनाश्च भूत्वा प्रभोऽसमर्थः किल वर्णनेऽस्मि ॥४॥

सुतः स साक्षाद्भगवानितीव प्रतर्कये राजकुलप्रदीप ।
ममैव भाग्योदयमूलहेतुर्धनुर्द्विधा नाम विधाय जातः ॥५॥

ममात्मजां रूपगुणप्रपूर्णामयोनिजां भूमितलात्प्रजाताम् ।
ददामि रामाय गुणोज्ज्वलाय प्रमोदरोमाञ्चितसर्वगात्रः ॥६॥

वसुन्धरागर्भसमुद्भवाया वसुन्धरावल्लभ मत्प्रियार्थम् ।
शुभप्रदानाय भवत्सुताय प्रदेह्यनुज्ञां कृपया ममेह ॥७॥

भवान् सुबन्धुः सचिवैश्च सार्धं पुरीं मदीयामधुना समेतु ।
अनुग्रहेणापि तथैव राजन् कृतार्थमेवाभिनयेत्तु मां च ॥८॥

मया कदाप्यद्भुतशीलपूर्णं न वीक्षितं तादृशवीरकर्म ।
कृतं भवत्पुत्रवरेण सम्यङ्नृपोत्तमातो हि भवामि हृष्टः ॥९॥

दयानिधेऽमुं जनमद्य राजन् दृशा कृपार्द्रीकृतयाभिपश्य ।
पुरं मदीयं परिपूतमस्तु त्वदङ्घ्रिपङ्केरुहबन्धुनाथाः ॥१०॥

समं समागच्छतु पत्तनं मे भवान्नृपेन्द्रो महिषीगणेन ।
पुरोहितेनापि वसिष्ठनाम्ना प्रजापतेरात्मभवेन साक्षात् ॥११॥

निशम्य कल्याणवचांसि राज्ञो विदेहमानामनराजसूनुः ।
अवाप हर्षं तदनु प्रियाभ्यः शशंस सर्वं च पुरे जनेभ्यः ॥१२॥

यथाविधि प्रीतिपुरस्सरः सन्विदेहभृत्यानपि तोषयित्वा ।
पुरीं पिपासुर्जनकेन्द्रगुप्तां बभूव सज्जो निजबन्धुयुक्तः ॥१३॥

अलंचकारात्मपुरीं सुवार्तां निशम्य राजा कदलीकलापैः ।
तथा ध्वजैर्वा शतवर्णयुक्तै रसालपर्णैः किल मङ्गलार्थम् ॥१४॥

पुरी त्वयोध्या शुशुभे शुभाभिः स्वलंक्रियाभिश्च मणिप्रभाभिः ।
रघूद्वहोद्वाहकथां निशम्य प्रमोदपूर्णाप्यविदेवतेव ॥१५॥

ततः प्रतस्थे सचिवैः प्रवीणैः सहावरोधेन च सैन्यसङ्घैः ।
प्रभूतरत्नानि धनानि चैव प्रभुर्गृहीत्वा मिथिलामयासीत् ॥१६॥

ममोपकारार्थमनल्पवीर्यः कुशाग्रबुद्धिः कुशिकात्मजो नु ।
ममात्मजं राममयाचतेति प्रजाधिनाथो हृदये ननन्द ॥१७॥

स्वपुत्रवक्त्राम्बुजवीक्षणार्थं ययौ स धीमान् त्वरितं विदेहान् ।
प्रभुर्न सोढुं विरहं तदीयं चिराय चोत्कण्ठितचित्तवृत्तिः ॥१८॥

चतुर्दिनान्ते चतुरङ्गसेनावृतः प्रपेदे मिथिलां स राजा ।
अदीयत स्वागतमस्य राज्ञाप्यपूर्वदृष्टं जनकेन हर्षात् ॥१९॥

अनेकरत्नोज्ज्वलहर्म्यमेकं ह्यदर्शयद्राजवरस्य तस्य ।
निशाम्य रामं जगदेकनाथं सलक्ष्मणं भूरि ननन्द तत्र ॥२०॥

सुतावपि स्मेरमुखौ तदीये प्रणेमतुः पादसरोरुहे तौ ।
नृपोऽपि तौ प्रीतिभरेण पश्चात्समालिलिङ्गातिमनोहराख्यौ ॥२१॥

नृपं स सम्बन्धिनमर्यमाभं विदेहनाथो बहु पूजयित्वा ।
विवाहकार्याण्यखिलानि कर्तुं समुद्यतोऽभूत्सचिवैः समेतः ॥२२॥

कुशध्वजो राजवरानुयातो महीभृदायान्मिथिलां सहर्षः ।
स माण्डवीं च श्रुतपूर्वकीर्तिं समानिनाय स्वसुते सुदत्यौ ॥२३॥

युधाजिदप्यागतवान् विदेहान् तदीयराहूतसमस्तबन्धुः ।
स केकयानामधिपः ससैन्यो विवाहसन्दर्शनबद्धतृष्णः ॥२४॥

नृपालका बान्धववर्गभाजः समाययुर्ये च सुहृद्वराश्च ।
नवीनसम्बन्धममर्मधितस्य प्रभुद्वयस्याथ विदेहदेशम् ॥२५॥

जनाः समागम्य पुरेऽनेकदिग्भ्यो विवाहकर्मेक्षणदत्तचित्ताः ।
यथा स्वराज्यस्पृहयातिनाथ्य प्रमाः स्वराष्ट्रीयममानिवेशम् ॥२६॥

शुभग्रहाणां बलसंयुतानां शुभेक्षणैर्मङ्गलदायकेऽह्नि ।
वसिष्ठगाधिप्रभवादिविप्रा विवाहलग्नं विदधुर्हि शीघ्रम् ॥२७॥

नृपाज्ञयाऽक्रियताथ भृत्यैर्विवाहशाला रमणीयरूपा ।
अमुत्र तत्राखिललोकवृन्दप्रपूजनार्थं सकला क्रियालिः ॥२८॥
अकारि वेदिर्ज्वलनाहुतीनां प्रदानहेतोरपि मण्डपेऽप ।
यतोऽनलः सर्वशुभक्रियाणां फलप्रदो दैवतमुत्तमं च ॥२९॥
पुरोहिता वेदविदां वरिष्ठा बभुः शतानन्दवसिष्ठमुख्याः ।
नवीनवेदीमभितो यथा वा जनार्दनं भक्तजनास्तथैव ॥३०॥
क्रियाकलापे चतुरास्तदानीं समानयन्सर्वपदार्थराशिम् ।
समित्कुशं क्षीरमपाम्बु गाङ्गं घृतं तथा तण्डुलधान्यराशीन् ॥३१॥
प्रसूनपङ्क्तिः क्वचिदेव दृष्टा क्वचिच्च गन्धादिपदार्थराजिः ।
क्वचित्सुवर्णं रजतं क्वचिच्च प्रसाधनं वाप्यपरत्र दृष्टम् ॥३२॥
क्वचित्सपूगानि च नागवल्लीदलानि सङ्ख्यारहितानि तत्र ।
तथापि कर्पूरविराजितानि सुगन्धचूर्णानि रसोज्ज्वलानि ॥३३॥
ततो नृपः पङ्क्तिगतो द्विजेभ्यो गुणोज्ज्वलेभ्यः श्रुतिपारगेभ्यः ।
ददौ सवत्सानि गवां शतानि प्रभूतमानन्दमवाप्य शुद्धः ॥३४॥
गजान् हयान् वा विषयान् प्रहृष्टो विवाहकाले तनयस्य राजा ।
अलङ्कृतान् हेमविभूषणैश्च ददौ जनेभ्यः सकलेभ्य एव ॥३५॥
चकार दानानि च सात्विकानि प्रभुः स सत्वोज्ज्वलरूपधारी ।
ननन्द सर्वापि मही प्रसिक्ता प्रदाननीरेण वधूर्नवेव ॥३६॥
कुमारकाणां स विवाहकाले चकार तृप्तिं निजपूर्वजानाम् ।
शुभाशिषो लब्धुमसौ पितॄणां समस्तसन्तानकुलाभहेतोः ॥३७॥
१६

प्रभातकाले रघुनन्दनानां कृतानि सन्मङ्गलमज्जनानि ।
सुमङ्गलावृन्दमथापि चक्रे प्रसाधनं पुत्रचतुष्टयस्य ॥३८॥

पतिव्रतास्तत्र जगत्पतिं तं निशाम्य नीलाम्बुदसन्निकाशम् ।
अवापुरानन्दमतीव चक्रुस्ततश्च नीराजनमेव चारु ॥३९॥

स तूर्यघोषैः श्रुतियुग्मरम्यै रघूद्वहः सानुज एव निन्ये ।
मणिप्रभापुञ्जमनोज्ञयाने प्रतिष्ठितो विष्णुरिव स्वलोके ॥४०॥

तमन्वयात्पङ्क्तिरथः स वृद्धः सवृद्धमन्त्री पुरुहूतमित्रम् ।
समस्तराजन्यकुलानुयातस्तथा समं वा महिषीगणेन ॥४१॥

विदेहनाथोऽपि सबन्धुवर्गो जगाम पश्चात्सचिवैश्च सार्धम् ।
सभां पिपासो रघुनन्दनस्य विवाहकार्यातुरचित्तवृत्तिः ॥४२॥

रथे स्थितो भूषणरञ्जिते च प्रभुः स रामो धवलाश्वयुक्ते ।
बभौ विवस्वानिव पूर्वशैले प्रसारितस्वीयकरो हरित्सु ॥४३॥

दृशामिषाद्यं सरसीरुहाक्षं पुरस्त्रियस्त्यक्तगृहक्रियाश्च ।
ससंभ्रमा द्वारि निजालयानां बभुर्महोत्साहपरीतचित्ताः ॥४४॥

अलङ्क्रियामग्नमतिस्तु काचित्स्वनं च तूर्यस्य निशाम्य शीघ्रम् ।
गलेऽपि काञ्चीं तनुमध्यभागे सुवर्णमालां च बबन्ध तन्वी ॥४५॥

रथस्थमालोकयितुं लताङ्गी लतेव हैमः किल कल्पमेव ।
समाजगामाथ समुत्सुकान्या ह्यलङ्क्रियामप्यपहाय तूर्णम् ॥४६॥

विधिप्रयुक्ता विविधा वराङ्ग्यः क्रियाकलापानपि ता विहाय ।
प्रसाधनानि प्रभुसज्जनानि जगत्पतिं द्रष्टुमथ प्रवृत्ताः ॥४७॥

गृहागतं कान्तमपीन्दुवक्त्रा वधूः विलान्या न विलोक्य शीघ्रम् ।
जगाम रामं नयनाभिरामं सहानुजं द्रष्टुमनन्यचित्ता ॥४८॥

गवाक्षदेशे निहितानि पुर्यां वराङ्गनानां वदनानि तत्र ।
विरेजिरे पल्वलमध्यगानि प्रभायुतानीव सरोरुहाणि ॥४९॥

ततः कयाचित्तपनारविन्दे कुमारसंदर्शनदत्तबुद्धया ।
कृतश्च लाक्षारस एव पश्चात्तयाञ्जनं पादयुगे धृतं च ॥५०॥

ययौ गृहद्वारमथापरा स्त्री वरावलोकस्पृहया समेता ।
विकीर्णकेशा रमसाद्विकिरन्ती सुमानि मार्गे पतितानि मूर्ध्नः ॥५१॥

स मन्दहासाननरञ्जितश्रीः श्रियःपतिर्भ्रातृभिरेव साकम् ।
समर्चितः सद्भिरनन्यचित्तैः समासदन्मङ्गलमण्डपान्तम् ॥५२॥

करावलम्बेन विदेहनाथो वरं रथात्सोऽप्यवतार्य हृष्टः ।
निनाय तं भ्रातृममेनमेव प्रदीप्तवह्नेर्निकटं समायाम् ॥५३॥

ततः कुमारीं पतिपुत्रवत्यः स्वभावसौन्दर्यनिधिं सलज्जाम् ।
विभूषयामासुरलंक्रियाभिस्तथापि यत्ना विफला बभूवुः ॥५४॥

निमज्जनं मङ्गलवारिमध्येऽप्यकारयन् पूर्वमिलासुतायाः ।
अवाप तेनापि नवोद्गताया: प्रभां सरस्या सरसां नलिन्याः ॥५५॥

विधूपितामुदय भूमिकन्या सुगन्धधूमे रसचन्दनानाम् ।
अलङ्कृता कुंकुमचूर्णकाद्यैः सुमङ्गलाभिर्महनीयशोभा ॥५६॥

सितांशुकेनाथ वराङ्गनाङ्गं पिधाय तस्योपरि हेमकाञ्चीम् ।
निवेशयामासुरथाङ्घ्रिपद्मे सुवर्णमञ्जीरयुगं मनोज्ञम् ॥५७॥

तथापि चक्रुस्तरलान् कुमार्या गले त्रिरेखारुचिरेऽपि हारान् ।
स्तनद्वयस्पर्शनलब्धकम्पा भृशं तदीयोरसि ते ह्यनृत्यन् ॥५८॥

शिरोरुहान्श्यामलवर्णदीप्तांश्चिरं प्रभाच्छायविनिर्गतनाथाः ।
सुवासिनीवृन्दमनेकतैलैः सुवासिताश्चारु चकार तत्र ॥५९॥

शुभैः शुभाङ्गी कमलादिभिः सा सखीजनेनाप्यभिमण्डिताभूत् ।
तदा बभौ सापि लतेव रम्या वसन्तकाले बहुपुष्पपूर्णे ॥६०॥

ललाटदेशे नवमोहनाङ्ग्याः सखीजनः सुष्ठु बबन्ध पश्चात् ।
विवाहरक्षाभिधमेव सूत्रं सुवर्णरेखापरिशोभितं च ॥६१॥

विभूषणानि प्रसभं कुमारीं न भूषयामासुरपोत्तमानि ।
परन्तु तान्येव वराङ्गना सा विभूषयामास भगतनुना ॥६२॥

श्रुतिद्वये काञ्चनकर्णभूषां चकार काचित्पृथिवीशुनायाः ।
तथांगदान्यंशुकयावृतानि भुजद्वये चाहरते तदानीम् ॥६३॥

कुमारि वीरं पतिमेव लब्ध्वा धुरि स्थिता त्वं भव वीरसूनाम् ।
इतीरिता बन्धुजनेन सीता त्रपावनम्रा जननीं ननाम ॥६४॥

तथापि वत्से भव भर्तरि त्वं कृतानुरागा पतिभक्तिपूर्णा ।
पतिव्रतानामिति पूजनीया विवर्धमानामवदाशिषोक्ता ॥६५॥

ततोऽभिनीतानलहोमवेदिं ह्युपाविशद्राघववामपार्श्वे ।
ज्वलन्तमग्निं शिरसा ननाम स्वभावतः सा शुभशीलयुक्ता ॥६६॥

विभाकरामाद्रघुवीरवक्त्राद्धुताशनाच्चैव पतिव्रतास्यात् ।
सभा समस्ता परिदीपिताभूत्कृपीटयोनित्रयभासमाना ॥६७॥

तयोर्मिला लक्ष्मणपार्श्वसंस्था तदग्रजस्यैव च माण्डवी सा ।
कुमारिकान्या श्रुतकीर्तिनाम्नी बभूव शत्रुघ्नवरस्य पार्श्वे ॥६८॥
पुरोधसौ वंशयुगस्य तस्य प्रकीर्तनं चक्रतुरङ्गपाय ।
रवेस्समारभ्य रघोः कुलस्य निमेस्तथान्यस्य च तत्र गोष्ठ्याम् ॥६९॥
पुरोधसा पश्य पतिं तवेति प्रचोदिता चारुतरं ददर्श ।
जगत्पतिं पार्श्वमवं तदानीं दृशार्धवक्रीकृतया नताङ्गी ॥७०॥
अकारयद्रामसुखेनसाक्षाद्रघुस्समीपे स पुरोहितस्तु ।
न सर्वथा त्वातिचरानि धर्मे चतुर्विधार्थेष्विति च प्रतिज्ञाम् ॥७१॥
गृहाण सीताकरमम्बुजातं स्वदीयहस्तेन यथोष्णरश्मिः ।
इतीरितो विप्रवरेण रामोऽग्रहीदरं तत्करपल्लवं च ॥७२॥
गृहाण भद्रे पतिपाणिपद्मं मुवस्सुतोक्ता प्रससार पाणिम् ।
निजं निजप्रीतिकरस्य पाणिग्रहार्थमेषा कुतुकावृता नु ॥७३॥
सुवर्णगात्र्याः करपल्लवस्तु प्रमोदनेत्राम्भोधरमञ्जिकाशे ।
करे स्थितो भूरि बभौ तदानीं सुवर्णरेखा निकषे यथा वा ॥७४॥
ततः स माङ्गल्यमणिप्रभाभिः प्रदीपितं मूर्तमिवानुरागम् ।
सुवर्णतन्तुं परिगृह्य कण्ठे बबन्ध रामो मिथिलात्मजायाः ॥७५॥
करौ तदा तस्य कपोलयुग्मं क्षमात्मजायाः स्पृशतः स भूयः ।
बभूवतुस्तौ प्रथमं स्पृशन्तौ तथापि रोमाञ्चधरौ च हर्षात् ॥७६॥
त्रिलोकनाथो सरसीरुहाक्ष्याः करग्रहं कुर्वति लोकगुप्त्यै ।
शुभा द्युलोकादमरेन्द्रमुक्ता पपात वृष्टिर्मकरन्दगर्भा ॥७७॥

तथैव तस्यावरजा बभूवुर्गृहस्थधर्माभिरताः क्रमेण ।
स्वकीयपत्नीकरवारिजानां समागमात्प्राप्नुरतीव हर्षम् ॥७८॥

नवीनवैवाहिकसंस्कृतीनां नृपात्मजानां च सतीसुतानाम् ।
सुखं हि भूयादिति तत्र संस्थैर्महानुभावैर्जगदे समायाम् ॥७९॥

शुभाक्षतैर्मङ्गलसूचकैस्तान् वधूवरान् ज्ञानवयोऽभिवृद्धाः ।
गिराशिषां च प्रशशंसुराशु प्रमोदपूर्णा गुरवोऽपि तत्र ॥८०॥

प्रदक्षिणीचक्रुरथानलं ते नृपात्मजास्तत्सतीद्वितीयाः ।
भवत्सकाशे गृहधर्मबद्धा इति ब्रुवन्तः खलु चित्रभानुम् ॥८१॥

घनक्षयोदीर्णनवीनधूमाद्विलोचनानि प्रचकाशिरे नु ।
नवाम्बुजानीव हिमावृतानि सरक्तवर्णानि नृपात्मजानाम् ॥८२॥

प्रचिक्षिपुस्ते नरपालपुत्राः कलसलाजाननले समन्त्रम् ।
हुताशनस्तानखिलान् हि भुक्त्वा प्रकाशते मोदरवं स कुर्वन् ॥८३॥

अतर्पयद्राजतपोधनः स प्रभुर्द्विजश्रेष्ठगणं समायाम् ।
सुदक्षिणो दक्षिणया समेतं प्रयच्छति स्माथ जनाय दानम् ॥८४॥

फलानि पुष्पाणि च नागवल्लीदलानि पूगैस्सह पण्डितेभ्यः ।
तथा जनेभ्यश्च समागतेभ्यो ददौ सुतोद्वाहविधौ प्रहृष्ट ॥८५॥

जनश्च नैको न बभूव तृप्तः प्रभौ विदेहाधिपतौ प्रसन्ने ।
नभोविभागे जलदे स्थिते किं प्रयान्त्यतृप्ताः किल चातकौघा ॥८६॥

पुनः पुनर्वीक्ष्य वधूवरौ तौ ययुर्जनाः स्वीयगृहाणि तृप्ताः ।
गुणांस्त्रघूणां च नराधिपस्य प्रकीर्तयन्तश्च सतीसुतानाम् ॥८७॥

सहस्रशो विप्रवरान्नरेन्द्रः स भोजयित्वा समवाप कीर्तिम् ।
तथापि कन्यां गुणरञ्जिताय प्रदाय रामाय फलं महार्घम् ॥८८॥
वधूवरौ यामधुनापि तारां विवाहकाले नमतो दिनान्ते ।
अरुन्धतीं तां सधवां च साक्षात्प्रणेमतुर्नूतनदम्पती तौ ॥८९॥
चिरं हि वत्से भव रामपत्नी यशस्विनी लोकसुखङ्करी त्वम् ।
तथेति सीता जगदे कुमारी समेयमाना भगिनीसमेता ॥९०॥
जगन्निवासो जनकाङ्घ्रियुग्मं तथैव सीताजनकस्य पादौ ।
ननाम पत्नीसहितश्च भक्त्या गुहः सदारो हरिशूलिनोर्वा ॥९१॥
यथाक्रमं मातृजनं ववन्दे रघुप्रवीरः सहितश्च वध्वा ।
ततोऽखिलान् वृद्धजनान् क्रमेण स्वकीयभार्याजननीसमानम् ॥९२॥
समीक्ष्य रामं विनतं पदाब्जे सतीद्वितीयं समितेर्गुरूणाम् ।
तथैव तस्याप्यनुगा वितेनुः सदा जनः श्रेष्ठगतानुसारी ॥९३॥
विवाहकार्याणि यथाविधीत्थं दिनानि पञ्चप्रमितानि पुर्याम् ।
कृतानि सम्बन्धिमनोत्सवार्थं नृपेण सर्वार्थविदा सहर्षम् ॥९४॥
वराय कन्यां पुरुषोत्तमाय प्रदाय राजर्षिरवाप शान्तिम् ।
मनश्च तस्याप निवृत्तभारं प्रसन्नतां शारदचन्द्रिकायाः ॥९५॥
ततः सपर्यादिभिरर्च्यमाना नृपालकाः साधुवचो ब्रुवाणाः ।
नृपेन्द्रमापृच्छ्य यथागतेन प्रयान्ति राष्ट्राणि यथा स दृष्टाः ॥९६॥
सुसत्कृतस्तेन नृपेण भूयो बभूव सज्जः प्रतिगन्तुमेव ।
पुरीं स्वकीयां पुरहूतमित्रं समं सुतैः पङ्क्तिरथोऽपि पश्चात् ॥९७॥

श्रीकौशिकोऽपि रघुवर्यविवाहकार्यं
सर्वं समाप्य विनतेषु सुतेषु हृष्टः ।
आशीर्वचांसि विमलानि जगौ च पश्चा-
त्पुण्यं हिमाचलतलं हि तपो जगाम ॥९८॥

सीतादयोऽथ निजकान्तगृहं प्रयातुं
सज्जा बभूवुरतिकौतुकहर्षपूर्णाः ।
लोके विवाहसमयादनु कन्यकानां
बुद्धिर्भवत्यभिमुखी पतिमन्दिरस्य ॥९९॥

बाल्यादपि प्रतिदिनं परिवर्धिता या
मात्रा तथा जनकराजतपोधनेन ।
सा जानकी कथमपि प्रविहाय तौ हि
श्रीराघवेण सह यातुमभूच्च सज्जा ॥१००॥

सीता सखीगणमथ प्रियमार्द्रवृत्तं
दृष्ट्वा च बाष्पपरिपूर्णविलोचनाभ्याम् ।
आलिङ्ग्य ताः किमपि दुःखभरेण नोक्त्वा
छाया यथा रघुकुलोत्तममन्वगच्छत् ॥१०१॥

दशरथनरपालो बान्धवैरात्मजैश्च
सह जनकनरेन्द्रं तूर्णमापृच्छ्य सर्वान् ।
निजपुरमतिहृष्टो निर्जगाम प्रदीप्तं
हयगजरथयुक्तश्चण्डवीर्यैः स्वपाद्धैः ॥१०२॥

पथि हि परशुरामं जामदग्न्यं समीक्ष्य
पितरमपि च भीतं दर्शनात्तस्य मत्वा ।
परमपुरुषरूपस्तेजसा तं विजित्य
प्रथितनिजचरित्रः प्राप रम्यामयोध्याम् ॥१०३॥
पुरमथ जयघोषैः प्राप्य रामः समार्यो
निखिलजनसमेतश्चानुजैः प्राप्तभार्यैः ।
मणिकिरणसहस्रैर्भूषितं मन्दिरं स्वं
रविरिव गिरिशृङ्गं प्राविशत्सप्रमालिः ॥१०४॥
विशति रघुवरेण्ये सीतया चारुदत्या
सह मणिमयहर्म्यं दीपिकामालिकाभिः ।
विलसितममराणां पाणिभिः सृष्टु मुक्ता
भुवि मधुरनिनादा पुष्पवृष्टिः पपात ॥१०५॥
चिरसमयमनैषीत्सीतया चारुगात्र्या
सह रघुकुलवर्यः सर्वशोभाभिदीप्ते ।
विविधशुचिसुखानामुन्नतिं प्राप्य धीमान्
क्षणमिव निजसौधे शुद्धचित्तः शुचिश्रीः ॥१०६॥

॥ सर्वं श्रीरामचन्द्रदिव्यचरणारविन्दार्पणमस्तु ॥

इति श्रीसीतास्वयंवरे महाकाव्ये श्र्यङ्के
जानकीपरिणयो नाम षोडशः सर्गः ॥

॥ समाप्तमिदं महाकाव्यम् ॥

मङ्गलम्

॥ श्रीः ॥

# उपसंहारः

विश्वामित्रमहर्षिवंशजलधौ जातः शशाङ्को यथा
सुब्रह्मण्यकृपासुधाकणशतैरार्द्रीकृताङ्गः सुधीः ।
पित्रोर्दिव्यपदारविन्दविनतः श्रीनागराजाभिधः
कृत्वा काव्यमिदं कृती विजयते लोके मुदे धीमताम् ॥१॥

सीतारामकथासुधारसकणैः सम्यक् प्रसिक्तं त्विदं
काव्यं कर्णरसायनं भुवि जनाः श्रुत्वा पठित्वा मुदम् ।
संप्राप्यातुलकीर्तिवित्तसहिता जीयासुरुर्वीतले
इत्याशां प्रकटीकरोमि विनतो दासोऽयमीशज्जनः ॥२॥

द्विजजननिकरेभ्यो मङ्गलं जानकीशो
दिशतु परकृपालुः सज्जनेभ्यश्च गोभ्यः ।
भवतु निखिलपृथ्वी सस्यपूर्णा समृद्धा
सुखधनपरिपूर्णाः सन्तु सर्वे च तस्याम् ॥३॥

यत्कृपालवसंपर्कात्संपूर्णं काव्यमुत्तमम् ।
तं वन्दे जानकीजानिं जगदीशं पुनःपुनः ॥४॥

॥ शुभं भूयात् ॥

॥ श्रीराममन्त्रमहिमा ॥

सकलनिगममन्त्रं सर्वशास्त्रैकमन्त्रं
भवभयहरमन्त्रं भक्तसौभाग्यमन्त्रम् ।
भरतप्रुखदमन्त्रं भावनातीतमन्त्रं
जप जप परमन्त्रं रामरामेति मन्त्रम् ॥१॥
दशरथसुखमन्त्रं दुःखदावाग्निमन्त्रं
दनुजभयदमन्त्रं दीनकारुण्यमन्त्रम् ।
दशगलवधमन्त्रं योगिनिश्वासमन्त्रं
जप जप परमन्त्रं रामरामेति मन्त्रम् ॥२॥
मुनिजनजपमन्त्रं मुक्तिमाङ्गल्यमन्त्रं
मरणतरणमन्त्रं मर्त्यमन्दारमन्त्रम् ।
मधुरसयुतमन्त्रं धीरवैराग्यमन्त्रं
जप जप परमन्त्रं रामरामेतिमन्त्रम ॥३॥
रसिकमधुरमन्त्रं मैथिलीप्रेममन्त्र
विबुधविनुतमन्त्रं विश्वरक्षैकमन्त्रम् ।
विषयविषदमन्त्रं रागिणां भव्यमन्त्रं
जप तप परमन्त्रं रामरामेति मन्त्रम् ॥४॥
कृपणदयितमन्त्रं दुःखदोषघ्नमन्त्रं
सुजनविमलमन्त्रं ब्रह्मनिष्ठैकमन्त्रम् ।
गिरिशजपितमन्त्रं पार्वतीभव्यमन्त्रं
जप जप परमन्त्रं रामरामेति मन्त्रम् ॥५॥

॥ श्रीः ॥

# ॥ अभिप्रायसंग्रहः ॥

सीतास्वयंवरप्रणेतृवर,

नवसुमावसुमोपरसान्विता त्वदुदिता कविता सदलङ्कृता ।
नवरसज्ञमनःसुनवोत्सवं नववधूरिव सा जनयेद् ध्रुवम् ॥

इत्यभिमन्यते,

Sd. श्रीश्रीशंकरतर्करत्नः
काशी हिन्दुविश्वविद्यालयीय प्राच्य
विद्यालयस्थदर्शनशास्त्र
प्रधानाध्यापकः

---

॥ परमहंसास्वादितचरणकमलचिन्मकरन्दाय ॥
॥ भक्तजनमनोनिवासाय ॥
॥ श्रीरामचन्द्राय नमः ॥

श्रीमद्रामायणीगङ्गाकुल्यातुल्यमिदं नवम् ।
काव्यं भव्यं दिव्यगव्यां दीव्याद्भव्यायुगावधि ॥

श्रद्धाभक्तिपुरस्कृतैः शुभवचोगुम्फैः प्रमादोज्ज्वलैः
प्राज्यैः प्रातिभभूषणैश्च विदुषां सम्मोदमातन्वती ।

सत्काव्यामृतवैखरी खरकलेरंहो विनिर्मार्जती
कुर्याद्भारतभारती हृदि रतिं श्रीनागराजात् स्रुता ॥
सद्भिः संशील्यतां सम्यगाशासानैश्चमत्कृतिम् ।
जानकीजानिरष्यस्य मङ्गलानि दिशत्वलम् ॥

Sd. विमलानन्दपुरी,
श्री रामकृष्णवेदान्तकशाला,
पार्थिव पौष पूर्णिमा, बेंगलूर.

---

॥ श्रीः ॥

व्यलोकि पूर्णं जनकात्मजायाः स्वयंवराख्यं कवनं सुचारु ।
मया नवीनं ललितं च पूर्णं रसैर्मनोहारि बुधाग्रणीनाम् ॥१॥
नागराजरचितं मृदुकाव्यं सुन्दरं जगति षोडशसर्गम् ।
आतनोति विदुषां मुदमात्मश्रेष्ठभावसुगुणैरिति मन्ये ॥२॥
आंग्लेयविद्योनिरुणेऽप्यधिकैर्विरसमी इति नागराजैः ।
सम्पाद्य वैदुष्यमिदं गिरां हि दिवस्ततोऽलोक्यमभिनन्दनार्हम् ॥३॥
दृष्ट्वा महाकाव्यमिदं सुहृद्यमास्थानविद्वान्तिरुनारणाख्यः ।
प्राप्तः प्रथमां पदवीं प्रशस्तेः पत्रं ददौ व्याकृतिशास्त्र ईदृक् ॥४॥

Sd. तु. सो. तिरुनारणय्यङ्गार,
व्याकरणप्रधानाध्यापकः
श्री चामराजेन्द्रसंस्कृतमहापाठशाला,
बेंगलूर.

23—3—41

ॐ

*Vidyabhaskara, Vidwan,*
M. RAMAKRISHNA BHAT, M A.,
*Lecturer in Sanskrit,*
*Supt. of Indian Languages*
St. *Joseph's College, Bangalore*

55, WILSON GARDENS,
*Bangalore City,*
27-11-1947

कविता रसभावबन्धुरा सदलङ्कारगणा गुणान्विता ।
पदविन्यसनातिमञ्जुला प्रमदा नेव वशीकरोति कम् ॥१॥
सुहृदा प्रतिभाजुषा मम ग्रथितं काव्यमवेक्ष्य मानसम् ।
घनवृन्दमवग्रहे मुदं लभते चातकपक्षिणो यथा ॥२॥
जननी सुरभारती दशां गमितानादरतः स्वसूनुभिः ।
कृपणा कवितारसायनैर्नवचैतन्यमियं समेष्यति ॥३॥
ललितैरितिवृत्तवर्णनैरपि पद्यैरनवद्यवृत्तकैः ।
रचितं जनकात्मजास्वयंवरकाव्यं विदुषां भवेन्मुदे ॥४॥
भ्रमतः स्खलनं क्वचिद्भवेदिति मत्वा गुणदुग्धसङ्ग्रहे ।
मम मानसहंस उत्सुकोऽखिलदोषोदकवर्जनमत्र हि ॥५॥
विरलाः कवयो विचक्षणाः प्रभवः काव्यरता विमर्शकाः ।
कलितैकरसाश्च साम्प्रतं कविताश्रीः शरणं कमेतु तत् ॥६॥
ऋषिभिः प्रथितं सनातनं परिपुष्टं ननु धर्मभूरुहम् ।
अमितात्ममहोभिरुज्ज्वलं सकलार्थीप्सितदं च सादरम् ॥७॥
इह येऽभिलषन्ति मांसलं सफलं कर्तुमनारतं बुधाः ।
करणत्रितयेन सांस्कृती वरिवस्या क्रियतां परा हि तैः ॥८॥

इति सत्पथचारिणां वशंवदः

(Sd) M. Ramakrishna Bhat.

॥ श्रीः ॥

श्रीसंस्कृतकार्यालयः
अयोध्या
१७-८-४६

श्रीमत्सु परमादरणीयेषु पं. नागराजमहोदयेषु सादरं शुभाशिषः

भवतां "श्रीसीतास्वयंवरं" महाकाव्यमागतम्। अधीत्यानन्दोऽजनि। धन्या भवन्तः।

(Sd.) पं. कालीप्रसादशास्त्री
सम्पादकः
संस्कृतं साप्ताहिकपत्रम्.

---

## OPINIONS OF SCHOLARS

---

**Dr. S Mukerjee** M. A.,

Docteur-es Letters (Paris), Vedantatirtha, Sastri etc., Mayurbhanj Professor of Sanskrit and Head of the Department of Sanskrit Benares Hindu University

Benares Hindu University
*Benares, Dated 23-4-1945*

I have glanced through the manuscript of Mr. K. S. Nagarajan's epic poem "SITASVAYAMVARAM" in 16 cantos in which he describes some episodes of the Ramayana up to Sita's marriage. It is a graceful poem which shows considerable skill in Sanskrit versification. The language is simple, the imageries are apt and the periods smooth and

flowing It is a relief to read such a poem after the laboured pedantries of some of our classical mahakavyas I hope Mr. Nagarajan will enrich Sanskrit literature by cultivating his undoubted poetic gifts in the composition of other kavyas

Sd/- S Mukerjee

---

## SITASVAYAMVARAM

### (An appreciation)

This is the result of the maiden attempt at versification by Mr K S Nagarajan B.sc a young poet in the making He is a person of extra ordinary capacities, who is not, I suppose even heard of by many of the Vidwans and Pandits of Mysore to whom I like to introduce him as a ' young rose bud in the b oom among poetical composers ' Outside my offiial duties, I happened to see casually into some verses of this ardent youngster, whom I consider really a pride and an ornament in the field of Sanskrit Classical Literature, especially poetics His command of Sanskrit Language is really marvellous and his versification quick and spontaneous and best suited to the theme he wants to describe He has graduated from the Central College, Bangalore but quite unwontedly in a Language Group and especially in that Divine Tongue which is considered almost as dead or obsolete generally In whatever he undertakes and wheresoever he may be found employed he does it all with a will and succeeds admirably well and his work is much appreciated by his employers He is honest intelligent really capable and diligent but he is quite out of his natural element now, as

...rs in an atmosphere all his own, far above the common-...ce Many of his descriptions are truly grand and apt and ...y casual listener or observer will be carried away with ...em to regions beyond the clouds or into a finer ethereal at-...osphere or we may even say—to diviner realms and rap-...res The work commences with the arrival of Visvamitra ... Dasaratha's Court to ask for Rama and Lakshmana being ...nt along with him to protect his sacrifice and their wonder-...l exploits on the way to the sage's hermitage. It ends ...ith their aftermath up to the marriage of Seetha, the ...ughter of King Janaka of Mithila to the invincible hero ...d King Dasaratha's son Rama Especially the descriptions ...bout Sage Visvamithra's Hermitage (Canto III), the moon ...n (Canto IV), the holy river Ganges (Canto V), the conver-...ation between the mountain Lord and his daughter Uma and ...e latter's union with Siva in marriage (Canto VI), the ...escent of the Ganges and its further course (Canto IX), ...hhalya's praise of Rama on his freeing her from the curse ...f the sage Gauthama, her Lord (Canto XI), Visvamithra's ...ilographical anecdotes (Canto XIII), the dance of the celes-...ial damsel Menaka (Canto XIV), Rama's exploit in breaking Siva's bow in twain (Canto XV) and lastly the winning of the hand of the matchless Mithila Princess by Rama require special mention Readers will almost find themselves lost in thought and little perceive the quick march of time while so employed.

My own impression is that the work, besides being got printed by any munificent or philanthropic gentlemen or group or Company of publishers of literary works, by taking a copy right, may as well be encouraged either *in toto* or by suitable and useful selections from it, for incorporation in

Text books prescribed for the various annual Sanskrit Public Examinations at the end of the Middle School, S. S L. C. and the Intermediate-in Arts and Science Courses.

May God, in His divine grace and mercy, grant this yonng genius a long life and a bright, useful, and good career and vouchsafe to him the best prosperity ever dreamt of!

He carries with him my best wishes for all time. May he live long and happy and his work become imperishable as it merits!

"Narayana Mandiram"
No 362, VII Main Road,
Malleswaram P. O.
BANGALORE
D/6 10-1940

(Sd) M C Krishnaswamy Iyengar,
*Supt. Electrcal Audit and Accounts*
BANGALORE, (Retd)
and an ardent admirer and voracious reader of merited Sanskrit works

---

BANGALORE
27th February 1946,

My Dear Mr. Ramanujiengar,

Kindly allow me to introduce to you the bearer Mr. K S. Nagarajan, an excellent Sanskrit Scholar, with undoubted poetic gifts He has composed a poem called 'Sita Swayamvaram', which reveals his rare talents in versification. I entirely agree with the opinion of Dr S Mukherjee, Head of the Department of Sanskrit in the Benares Hindu University, which is here May I ask of you the favour of going through his work and do what you can in enabling him to have it published Any recommendation to our leading Sanskrit Pandits or Authorities will be of the greatest help He will be most grateful to you for any advice you may kindly give him

*Kindly excuse trouble,*

I am Yours very Sincerely
(Sd) V Subrahmanya Iyer
Registrar, Mysore University (Retd)

UNIVERSITY OF MYSORE

Central College,
BANGALORE

Department of Sanskrit 30—3—1941

Mr K. S Nagarajan has read out to me in full the "Sita Svayamvara", a Kavya that he has composed in Sanskrit The work is a brief restatement of the Balakanda In a clear and fluent style the work has been writteu and Mr. Nagarajan has shown that he possesses the poetic gift of no mean order The present work happens to be his first and just has it as been simple and interesting in itself, it has given him the confidence about further compositions which are, I am sure, to rank among the Mahakavyas in Sanskrit. I wish him success in his endeavour.

(Sd) V. T. Tirunarayana Iyengar
*Lecture in Sanskrit.*

---

C. Ramanuja Aiyangar, M A, L.T., 'Lake View' Mysore Road
Retd Dt. Educational Officer *Bangalore City, 28-6-40*
and Secretary, Bangalore Press

Mr K S. Nagarajan, B. Sc., Superintendent of the Audit Office, Mysore Electrical Deptt, read out to me the other day several portions of his own work in poetic composition in Sanskrit "Sitaswayamvaram". I listened to his reading with interest and attention, which it well deserved. I was really a surprise to me that one, who had graduated in Science from one of the constituent Colleges of the Mysore University, was possessed of such good and accurate knowledge of Sanskrit As far as I could see his language was pure, free from errors of Grammar, Idiom and Diction. It

was also simple, straight and smooth running There was dignity as also perspicuity in it. The thoughts embodied in the stanzas composed were pure and elevated The figures employed were always appealing and the illustrations apt and illuminating There was clear evidence everywhere that the poet had the gift in him for poetic composition One could easily see that he was closely following in the foot steps of the renowned poets Kalidasa and Bhavabhuti though there was no lack of original and independent thought. The passages intervening fitted in very well with the preceding and following poetic pieces The poet is still very young and he is full of promise for future With the lapse of years he is bound to show greater capacity for poetic composition and with the increase of knowledge and development of poetic skill he may assuredly become a Poet of repute. The public will be greatly benefited, if he should be afforded the required facilities to bring out what he has now in manuscript and what he will have in the years to come Such of those cultured gentlemen as have respect and love for the divine language will I trust readily come forward to extend their patronage to the poet who is devoting himself entirely to the work of familiarising Sanskrit poetry among those who care for all that constitutes our ancient culture and civilisation

(Sd) C Ramanuja Aiyangar,
For sometime Principal of the
Maharaja's Sanskrit College, Mysore

॥ श्रीः ॥

# शुद्धाशुद्धपत्रिका

| पृष्ठम् | श्लोकः | पादः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| 3 | २६ | २ | निपात | निपपात. |
| 4 | ३६ | २ | २: ॥६॥ | : ॥२६॥ |
| 5 | २७ | १ | उक्केति | उक्त्वेति. |
| 6 | १० | २ | स्वस्त्यम् | स्वास्त्यम् |
| 7 | १९ | ४ | षण्डाशु | षण्डांशु |
| 8 | २ | १ | घुम्द्ह | घुह्रहं |
| 10 | २१ | १ | विघ्न | विघ्न |
| 10 | ३३ | २ | विबुना | विबुधा |
| 14 | १९ | १ | रांम | राम |
| 14 | ६' | २ | दाशिमं | दाशिमं |
| 18 | ९१ | ४ | अकार | पकार |
| 10 | ९८ | २ | मुहु | मुहु. |
| 27 | ६३ | १ | तदेव | तद्देव |
| 29 | ७९ | १ | हव्य | हव्य |
| 23 | ८३ | १ | रवं | रवं |
| 47 | ८१ | २ | वाहा | वाह |

| पृष्ठम् , | श्लोकः | पादः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| 173 | २७ | १ | वर्याः | वर्या |
| 174 | ३१ | १ | घर्म | घर्म |
| 180 | ८९ | २ | मुदा | मृदा |
| 183 | २३ | २ | राट | राट् |
| 187 | ४४ | ३ | बबन्ध | बबन्ध |
| 192 | ८० | २ | चाल्नेऽस्त्र | चाल्नेऽस्त्र |
| 202 | ९५ | १ | सतायाः | सुतायाः |
| 204 | ६९ | १ | स्साप | साप |
| 208 | १०९ | १ | काभि | काभिः |
| 208 | १०९ | २ | सुष्ट | सुष्टु |
| 209 | १ | २ | रार्दी | रार्द्री |
| 210 | १ | ३ | निश्वा | निःश्वा |
| 212 | ३ | १ | लोल्य | लेल्य |

